तर्कसंग्रह with तर्कदीपिका of अन्नम्भट्ट – alongwith विवृति of नीलकण्ठ पंडित – Edited by Pt. जीवानन्द विद्यासागर भट्टाचार्य.

2/e, Calcutta, 1897

1239

15

Bill No. 5/07-08

182

2008-0642

# तर्कसंग्रहः ।

श्रीमता अन्नं भट्टेन विरचितः ।

तत्कृततत्त्वदीपिकाख्यटीकया

समुद्भासितः ।

श्रीनीलकण्ठपण्डितकृतविवृतिसमलङ्कृतश्च ।





पण्डितकुलपतिना,

वि, ए, उपाधिधारिणा

श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण

संस्कृतः प्रकाशितश्च ।

द्वितीय संस्करणम् ।

कलिकातानगर्य्याम् ।

नारायणयन्त्रे

मुद्रितः ।

1239

ई १८९७ ।

# तर्कसंग्रहः ।

श्रीमता अन्नं भट्टेन विरचितः ।

तत्कृततत्त्वदीपिकाख्यटीकया

समुद्भासितः ।

श्रीनीलकण्ठपण्डितकृतविवृतिसमलङ्कृतश्च ।

पण्डितकुलपतिना,

वि, ए, उपाधिधारिणा

श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण

संस्कृतः प्रकाशितश्च ।

द्वितीय संस्करणम् ।

कलिकातानगर्य्याम्

नारायणयन्त्रे

मुद्रितः ।

ई १८९७ ।

# तर्कसंग्रहः ।

निधाय हृदि विश्वेशं विधाय गुरुवन्दनम् ।
बालानां सुखबोधाय क्रियते तर्कसंग्रहः ॥१॥

विश्वेश्वरं साम्बमूर्त्तिं प्रणिपत्य गिरां गुरुम् ।
टीकां शिशुहिते कुर्वे तर्कसंग्रहदीपिकाम् ॥१॥

चिकीर्षितस्य ग्रन्थस्य निर्विघ्नपरिसमाप्त्यर्थं शिष्टाचारानुमितप्रतिबोधितकर्त्तव्यताकमिष्टदेवतानमस्कारलक्षणं मङ्गलं शिष्यशिक्षार्थं निबध्नंश्चिकीर्षितं ग्रन्थादौ प्रतिजानीते। निधायेति । ननु मङ्गलस्य समाप्तिसाधनत्वं नास्ति । मङ्गले कृतेऽपि कादम्बर्य्यादौ निर्विघ्नपरिसमाप्त्यदर्शनात् मङ्गलाभावेऽपि किरणावल्यादौ समाप्तिदर्शनात् अन्वयव्यतिरेकव्यभिचारादिति चेत् । न । कादम्बर्य्यादौ विघ्नबाहुल्यात् समाप्त्यभावः। किरणावल्यादौ तु ग्रन्थाद् बहिरेव मङ्गलं कृतमतो न व्यभिचारः। ननु मङ्गलस्य कर्त्तव्यत्वे किं प्रमाणमिति चेत् न शिष्टाचारानुमितश्रुतेरेव प्रमाणत्वात् "समाप्तिकामो मङ्गलमाचरेत" इति श्रुतेः। तथाहि मङ्गलं वेदबोधितकर्त्तव्यताकम् अलौकिकाविगीतशिष्टाचारविषयत्वात् दर्शादिवत्। भोजनादौ व्यभिचारवारणाय अलौकिकेति। रात्रिश्राद्धादौ व्यभिचारवरणाय अविगीतेति। शिष्टपदं स्पष्टार्थं "न कुर्य्यान्निष्फलं कर्म" इति जलताडनादेरपि निषिद्धत्वादिति ।

वन्दे गुरुं शिवं साम्बं दक्षिणामूर्त्तिमव्ययम् ।
यद्वन्दनेन मन्दोऽपि विन्देद्गुरुसमानताम् ॥१॥

आरिप्सितग्रन्थस्य निर्विघ्नपरिसमाप्तये समाचरितं मङ्गलमीश्वरनत्यात्मकं

शिष्यशिक्षायै निबन्धं चिकीर्षितं प्रतिजानीते। विश्वेश्वरमिति गिरां गुरुं निखिलविद्यानामुपदेष्टारं इदमपि विश्वेश्वरे विशेषणम्। 'गिरं गुरुम्' इति पाठे तु 'सरस्वतीं विद्यागुरुं च प्रणिपत्य' इत्यर्थो बोध्यः। स्वग्रन्थस्येतरग्रन्थैरगतार्थतां दर्शयति—शिशुहितामिति। तर्कसंग्रहदीपिकां तर्कसंग्रहार्थप्रकाशिकाम्। आचरितस्य मङ्गलस्य तन्निबन्धस्य च फलं दर्शयति॥ चिकीर्षितेत्यादिना॥

ननु समाप्तिं प्रति मङ्गलस्य कारणता स्याच्चेत् तदा तदाचरणं युज्यते। नैव न सम्भवतीत्याशङ्कते। नन्विति। व्यभिचारादिति अन्वयव्यतिरेकव्यभिचारज्ञानरूपप्रतिबन्धकसत्त्वान्नियतान्वयव्यतिरेकसहचारनिश्चयरूपकारणासम्भवेन न कारणत्वनिश्चय इत्यभिसन्धिः। समाप्त्यभावादिति। अतो न व्यभिचार इत्यनेनान्वयः। विघ्नान्यूनसंख्याकस्य बलवत्तरस्य वा मङ्गलस्य विघ्ननिरसनद्वारा समाप्तिसाधनत्वेन तादृशमङ्गलाभावान्नान्वयव्यभिचार इतिभावः। बहिरेवेति। जन्मान्तर एवेत्यर्थः। अतः कुत्रचिद्ग्रन्थकर्तुर्नास्तिकत्वेऽपि न क्षतिः। अत इति। तादृशमङ्गलस्य विघ्नध्वंसद्वारा समाप्तिकारणत्वसत्त्वान्न व्यतिरेकव्यभिचार इत्यर्थः। एवञ्च कारणत्वं सिध्यतीति भावः। परे तु 'अत उक्तहेतुद्वयात् न व्यभिचारः नान्वयव्यतिरेकव्यभिचारः' इति व्याचख्युः। नवीनास्तु मङ्गलस्य विघ्नध्वंस एव फलम्। समाप्तिस्तु स्वसामग्रीविशेषादित्याहुः। एतत्तत्त्वमस्मदीयचिन्तामणिव्याख्यायामनुसन्धेयम्। मङ्गलस्य श्रुतिबोधितकर्तव्यताकत्वं व्यवस्थापयितुमाशङ्कते। नन्विति। अनुमितश्रुतेरेवेति। अत्रायमाशयः श्रुतेर्वेदबोधितकर्तव्यताकत्वरूपवक्ष्यमाणविधेयकोटिप्रविष्टत्वेऽपि तदन्तर्भावेण विधेयत्वमभ्युपगम्यते। तच्छ्रुतेरनुमितिपूर्वमसिद्धत्वात्। एतेन वह्न्यादिसाध्यकानुमितिविषयतामादाय 'वह्न्यादिकमनुमितम्' इति व्यवहाराभावेन श्रुतावनुमितत्वव्यवहारः कथमिति शङ्का निरस्ता। श्रुतौ विधेयताभ्युपगमेन तादृशव्यवहारे बाधकाभावात्। एवकारोऽप्यर्थकः। तेन मङ्गलं कर्तव्यं समाप्तिफलकत्वात् इत्यनुमानरूपप्रमाणान्तरसत्त्वेऽपि न क्षतिरिति। अन्ये तु 'बोधितकर्तव्यताकत्वसम्बन्धेन श्रुतेरेव साध्यता। अग्रिमग्रन्थस्याप्यत्रैव तात्पर्यम्। एवञ्च श्रुतेरनुमितत्वोपपत्तिः' इत्याहुः। अलौकिकेति। विधिमन्तरा रागादिप्राप्तभिन्नेत्यर्थः। अविगीतेति। धर्मशास्त्रानिषिद्धेत्यर्थः। शिष्टेति। वेदार्थतत्त्वज्ञानेन विहितकर्मकारीत्यर्थः। वेदोक्ताहिंसादिकर्तरि बौद्धेऽतिव्याप्तिवारणाय तृतीयान्तम्। आचारविषयत्वादिति। आचारः कृतिः तस्या इच्छानियामकविषयतासम्बन्धेन हेतुता इत्याद-

वत्तीति तद्विषयत्वस्य हेतुत्वानुधावनमितिभावः। यथाक्रमं हेतुविशेषणप्रयोजनमाह भोजनादौ इत्यादिना। ननु अलौकिकाविगीताचारविषयत्वस्यैव हेतुतास्तु। अशिष्टाचारविषये तादृशहेतोरसत्त्वेन व्यभिचारासम्भवात् इत्याशङ्कामिष्टापत्त्या परिहरति शिष्टपदमिति। जलताडनादौ अशिष्टाचारविषये हेतोरसत्त्वं स्फुटयति न कुर्यादिति। स्वर्गादिफले व्यभिचारवारणाय आचारविषयत्वेति। विधेयतया आचारविषयत्वार्थकम् इति संक्षेपः।

तर्क्यन्ते प्रतिपाद्यन्ते तर्काः द्रव्यादिसप्तपदार्थास्तेषां संग्रहः संक्षेपेण स्वरूपकथनं क्रियते इत्यर्थः। कस्मै प्रयोजनाय इत्यत आह। सुखबोधायेति। सुखेन अनायासेन बोधः पदार्थज्ञानं तस्मै इत्यर्थः। ननु बहुषु तर्कग्रन्थेषु सत्सु किमर्थमपूर्वग्रन्थः क्रियत इत्यत आह। बालानामिति। तेषामतिविस्तृतत्वाद् बालानां बोधो न भवतीत्यर्थः। ग्रहणधारणपठनपटुर्बालः न तु स्तनन्धयः। किं कृत्वा क्रियत इत्यत आह। निधायेति। विश्वेशं जगन्नियन्तारं शिवं हृदि निधाय नितरां स्थापयित्वा सर्वदा तद्ध्यानपरो भूत्वेत्यर्थः। गुरूणां विद्यागुरूणां वन्दनं नमस्कारं विधाय कृत्वेत्यर्थः।

तर्कपदस्य आरोपार्थकत्वभ्रमं वारयितुं द्रव्यादिसाधारणतर्कत्वं निर्वक्ति तर्क्यन्त इति। उपादानरूपसंग्रहस्यासम्भवादाह संक्षेपेण इति। स्वरूपकथनं स्वरूपज्ञानानुकूलः शब्दः। एतावता 'द्रव्यादिपदार्था विषयाः पदार्थतत्त्वावधारणं प्रयोजनम्, सम्बन्धश्च प्रतिपाद्यप्रतिपादकभावः, पदार्थतत्त्वावधारणकामोऽधिकारी' इति अनुबन्धचतुष्टयं प्रेक्षावत्प्रवृत्त्यङ्गं सूचितम्। षष्ठीतत्पुरुषभ्रमवारणायाह सुखेनेति। सुखबोधरूपप्रयोजनस्यान्यतः सिद्धत्वेन एतद्ग्रन्थकरणे प्रयोजनाकाङ्क्षा न शाम्यतीत्याशयेनावतरयति नन्विति। तेषां भाष्यादिग्रन्थानाम्।

द्रव्यगुणकर्मसामान्यविशेषसमवायाभावाः सप्त पदार्थाः।

पदार्थान् विभजते द्रव्येति। पदस्यार्थः पदार्थः इति व्युत्पत्त्या अभिधेयत्वं पदार्थसामान्यलक्षणम्।

ननु विभागादेव सप्तत्वे लब्धे सप्तग्रहणं किमर्थमिति चेत्। न। अधिकसंख्याव्यवच्छेदार्थत्वात्। नन्वतिरिक्तः पदार्थः प्रमितो न वा। नाद्यः प्रमितस्य निषेधायोगात्। नान्त्यः प्रतियोगिप्रमितिं विना निषेधानुपपत्तेरिति चेत्। न। 'पदार्थत्वं द्रव्यादिसप्तान्यतमत्वव्याप्यम्' इति व्यवच्छेदार्थत्वात्। ननु सप्तान्यतमत्वं सप्तभिन्नभिन्नत्वम्। एवञ्च सप्तभिन्नस्याप्रसिद्धत्वात् सप्तान्यतमत्वं कथम् इति चेत्। न। 'द्रव्यादिसप्तान्यतमत्वं द्रव्यादिभेदसप्तकाभाववत्त्वम्' इति तदर्थत्वात्। एवमग्रेऽपि द्रष्टव्यम्।



मूले सप्त पदार्था इति। द्रव्यादिरूपा ये पदार्थविभाजकाः सप्तोपाधयः तद्वन्तः पदार्था इत्यर्थः। अत्र सप्तत्वम् अपेक्षाबुद्धिविशेषविषयत्वम्। एवमेवाग्रिमग्रन्थस्यापि पर्य्यवसानमवसेयम्।

ननु सामान्यधर्म्मज्ञानस्य विशेषजिज्ञासां प्रति हेतुत्वात् सामान्यलक्षणकथनानन्तरमेव विभागो युक्तः। तथा च मूले कथमादौ विभाग इति न्यूनतां परिहरति पदस्येति। अर्थः अभिधेयः। उक्तव्युत्पत्त्या पदसम्बन्धाभिधाविषयत्वस्य लाभेऽपि पदसम्बन्धित्वांशस्याव्यावर्त्तकत्वादाह अभिधेयत्वमिति। लक्षणं सम्मत इति शेषः। तथा च न न्यूनतेति भावः।

विभागादेवेति। पदार्थत्वावान्तरधर्मपुरस्कारेण धर्मिप्रतिपादनादेव। अधिकसंख्याव्यवच्छेदार्थत्वादिति। तादृशसंख्यानिषेधसिद्धिफलकत्वादित्यर्थः। उद्देश्यविधेयभावस्थले उद्देश्यतावच्छेदके विधेयव्याप्यत्वभानमौत्सर्गिकम् इत्याशयेनाह पदार्थत्वमिति। इति व्यवच्छेदार्थकत्वादिति। एतद्रूपो यो व्यवच्छेदो निर्णयविशेषस्तदर्थत्वादित्यर्थः। सप्तभिन्नभिन्नत्वमिति। द्रव्यादयो ये सप्त पदार्थास्तद्भेदकूटविशिष्टभिन्नत्वं वक्तव्यम् इत्यर्थः। द्रव्यादिभेदसप्तकाभावत्वमिति। द्रव्यादिभेदानां प्रत्येकप्रसिद्धानां सप्तानां कुत्राप्यसत्त्वेन तादृशभेदसप्तकत्वावच्छिन्नाभावस्य सर्वत्र सत्त्वात् न दोष इति भावः। वस्तुतस्तु पदार्थत्वं द्रव्यादिसप्तान्यतमत्वव्या-

यम् इत्यस्य पदार्थत्वं द्रव्यत्वादिसप्तोपाध्यन्यतमत्वव्याप्यमित्यर्थः। एवं च बहुषु पुस्तकेषु सप्तान्यतमत्वाप्रसिद्धिशङ्का तत्समाधानपरस्य ननु सप्तान्यतमत्वं इत्यादिग्रन्थस्यासत्त्वे न क्षतिरिति ध्येयम्। एवमग्रेऽपीति। एवंरीत्या द्रव्याणीत्यादावपीत्यर्थः।

## तत्र द्रव्याणि पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि नवैव।

द्रव्यं विभजते तत्रेति। द्रव्यादिमध्ये द्रव्याणि नवैवेत्यन्वयः। कानि तानि इत्यत आह पृथिवीत्यादि।

ननु तमसो दशमद्रव्यस्य विद्यमानत्वात् कथं नव द्रव्याणि। तथा हि 'नीलं तमश्चलति' इति अबाधितप्रतीतिबलात् नीलरूपाधारतया क्रियाधारतया च द्रव्यत्वं तावत् सिद्धम्। तत्र तमसो नाकाशादिपञ्चकेऽन्तर्भावः, रूपवत्त्वात्। अतएव न वायौ, स्पर्शाभावात् सदागतिमत्त्वाभावाच्च। नापि तेजसि, भास्वररूपाभावात् उष्णस्पर्शाभावाच्च। नापि जले, शीतस्पर्शाभावात् नीलरूपाश्रयत्वाच्च। नापि पृथिव्यां गन्धाभावात् स्पर्शरहितत्वाच्च। तस्मात् तमो दशमद्रव्यम् इति चेत्। न। तमसस्तेजोऽभावरूपत्वात्। तथाहि तमो हि न रूपवद्द्रव्यम् आलोकासहकृतचक्षुर्ग्राह्यत्वात् आलोकाभाववत्। रूपिद्रव्यचाक्षुषप्रमायामालोकस्य कारणत्वात्। तस्मात् प्रौढप्रकाशकतेजःसामान्याभावस्तमः। तत्र 'नीलं तमश्चलति' इति प्रत्ययो भ्रमः। अतो नव द्रव्याणीति सिद्धम्।

द्रव्यमिति। नास्तिकवचनम्। मीमांसकमतं दूषयितुमुपन्यस्यति नन्वित्यादिना। प्रतीतिबलात् प्रात्यक्षिकप्रतीतिबलात्। तस्य द्रव्यत्वे अनुमानं प्रमाणयति—नीलरूपाधारतयेति। समवायेन नीलरूपवत्तयेत्यर्थः। तेन कालिकादिसम्बन्धेन तस्यातिप्रसक्तत्वेऽपि न क्षतिः। एवमग्रेऽपि बोध्यम्। तत्र द्रव्यत्वे सिद्धे

सति। अतिरिक्तत्वं व्यवस्थापयितुं क्लृप्तद्रव्येष्वन्तर्भावं निराचष्टे तमस इत्यादिना। अत एव रूपवत्त्वादेव। न वायाविति। अन्तर्भाव इत्यनुषज्यते। सम्बन्धभेदाभिप्रायेणाह—स्पर्शाभावादिति। इदञ्च ध्वंसप्रागभावाधिकरणेऽत्यन्ताभावो नाङ्गीक्रियत इति प्राचीनमताभिप्रायेण। अन्यथा समवायावच्छिन्नस्पर्शसामान्याभावस्य दैशिकविशेषणतया वायावप्युत्पत्तिकालावच्छेदेन सत्त्वाद् व्यभिचरितत्वापत्तेः। वस्तुतस्तु निरवच्छिन्नदैशिकविशेषणतया तस्य हेतुत्वं इति ध्येयम्। विषमव्याप्तं हेतुमभिधाय समव्याप्तं तमाह—सदागतीति। सदागतिर्विजातीयक्रिया। उपसंहरति—तस्मादिति। क्लृप्तेष्वनन्तर्भावादित्यर्थः। तेजोऽभावरूपत्वादिति। प्रौढप्रकाशकतेजोऽभावरूपत्वाङ्गीकारादित्यर्थः। अतस्तमस्यपि देशे तेजःपरमाण्वादिसत्त्वेन तेजःसामान्याभावासत्त्वेऽपि न क्षतिः। चाणुकादिवारणाय प्रौढेतीति दिक्। घटादिषु व्यभिचारवारणाय आलोकासहकृतेति। चक्षुर्ग्राह्यत्वं चक्षुर्जन्यज्ञानीयलौकिकविषयत्वम्। तेन तमसश्चाक्षुषे घटादीनामुपनयमर्यादया भानेऽपि न क्षतिः। विशेषाभावं दृष्टान्तयति—आलोकाभाववदिति। आलोकं विना रूपवत्त्वेन तमोविषयकचाक्षुषप्रमोदयादाह—प्रमायामिति। कारणत्वादिति। अन्यथा अन्धकारस्थले घटादेश्चाक्षुषापत्तेरिति दिक्। ननु तमसस्तादृशतेजोऽभावरूपत्वे तमसि रूपवत्ताप्रतीतिः कर्मवत्ताप्रतीतिश्च कथम् अभावे रूपकर्मणोरभावादित्यत आह—तत्रेति। तमसोऽतिरिक्तत्वे अनन्तावयवतत्प्रागभावादिकल्पनागौरवमत आवश्यकतादृशतेजोऽभावरूपत्वं सिध्यतीत्यपि बोध्यम्। (इति तमोवादः)।

द्रव्यत्वजातिमत्त्वं गुणवत्त्वं वा द्रव्यसामान्यलक्षणम्॥ लक्ष्यैकदेशावृत्तित्वमव्याप्तिः। यथा गोः कपिलत्वम्। अलक्ष्यवृत्तित्वमतिव्याप्तिः। यथा गोः शृङ्गित्वम्। लक्ष्यमात्रावर्त्तनमसम्भवः। यथा गोरेकशफत्वम्। एतद्दोषत्रयरहितो धर्मो लक्षणम् स एव असाधारणधर्म इत्युच्यते। लक्ष्यतावच्छेदकसमनियतत्वमसाधारणधर्मत्वम्। व्यावर्त्तकस्यैव लक्षणत्वे व्यावृत्तावभिधेयत्वादौ चातिव्याप्तिवारणाय तद्भिन्नत्वं धर्मविशेषणं देयम्। व्यवहारस्यापि लक्षणप्रयोजनत्वे न देयम्।

व्यावृत्तेरपि व्यवहारसाधकत्वात्। ननु गुणवत्त्वं न द्रव्यलक्षणम्, आद्यक्षणे उत्पन्नविनष्टे घटे चाव्याप्तिरिति चेत्। न। गुणसमानाधिकरणसत्ताभिन्नजातिमत्त्वस्य विवक्षितत्वात्।

'ननु एवमपि एकं रूपं रसात् पृथक्' इति व्यवहारात् रूपादावतिव्याप्तिरिति चेत्। न। एकार्थसमवायादेव तादृशव्यवहारोपपत्तौ गुणे गुणानङ्गीकारात्।

मुक्तिसाधनीभूतपदार्थतत्त्वज्ञानं लक्षणज्ञानं विना नोपपद्यते अत आह द्रव्यत्वेति। संयोगादिजनकतावच्छेदकतया द्रव्यत्वजातिसिद्धिरिति भावः।

ननु लक्षणलक्ष्यतावच्छेदकतयोरभेद इत्यत आह—गुणवत्त्वमिति। द्रव्यसामान्यलक्षणमिति। एवञ्च सामान्यधर्माकथनेन न्यूनतापि नेति भावः। दूषणत्रयरहितधर्मस्यैव लक्षणत्वस्य वक्ष्यमाणतया तज्ज्ञानं विशेषणीभूतदूषणत्रयरहितत्वज्ञानं विना न सम्भवति। दूषणत्रयरहितत्वज्ञानं तु विशिष्य दूषणत्रयज्ञानाधीनम् अभावबुद्धिं प्रति प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानस्य तन्त्रत्वात् इत्याशयेन दूषणत्रयं प्रदर्शयति लक्ष्यैकदेशावृत्तित्वमिति। लक्षणतावच्छेदकत्वाभिमतसम्बन्धेन किञ्चिल्लक्ष्यावृत्तित्वमित्यर्थः। लक्ष्यमात्रेति। मात्रपदं कृत्स्नार्थकम्। सम्बन्धविशेषावच्छिन्नलक्ष्यवृत्तित्वसामान्याभावस्फोरकम्।

एकशफत्वमिति। न चालक्ष्यवृत्तिरूपातिव्याप्तेरपि सत्त्वात् सङ्कर इति वाच्यम्। दुष्टसङ्करेऽपि दोषासङ्करादिति दिक्। एतद्दूषणत्रयरहित इति। उक्तदूषणाभावत्रयविशिष्ट इत्यर्थः। नन्वसाधारणधर्मो लक्षणमिति हि सिद्धान्तः तत्कथं तादृशदूषणत्रयरहितो धर्म इत्यत आह। स एवेति। इत्युच्यत इति अभियुक्तैरिति शेषः।

ननु साधारणत्वस्य लक्ष्यालक्ष्यवृत्तित्वरूपतया तदभावरूपासाधारणत्वस्याव्याप्त्यादिदोषग्रस्तधर्मेऽपि सत्त्वात् कथं दोषत्रयरहित एवासाधारणधर्म इत्याशङ्कां परिजिहीर्षुः असाधारणत्वमन्यादृशं निर्वक्ति। लक्ष्यतावच्छेदकसमनियतत्वमिति। लक्ष्यतावच्छेदकव्यापकत्वे सति लक्ष्यतावच्छेदकव्याप्यत्वमित्यर्थः। अव्याप्त्यसम्भवदलयोर्वारणाय सत्यन्तम्। अतिव्याप्तेर्वारणाय विशेष्यम्। धर्मपदन्तु लक्षणताघटकसम्बन्धेन व्यापकत्वादितात्पर्यग्राहकमितिभावः। अत्रेदं बोध्यम्। एते दोषा असाधारणत्वस्य विघटकाः। अतिव्याप्तौ व्याप्यत्वस्येतरयोश्च व्यापकत्वस्य

भङ्गात्। एतेषां दूषकताबीजं तु लक्षणेनेतरभेदसाधने अतिव्याप्तौ व्यभिचारः। इतरयोश्च भागासिद्धिस्वरूपासिद्धी इति।

ननु लक्ष्यतावच्छेदकसमनियतत्वस्य लक्षणलक्षणत्वे लक्षणस्य व्यावृत्तिरेव प्रयोजनमिति मते व्यावर्त्तकस्यैव तादृशलक्षणलक्ष्यतया व्यावृत्त्यादावतिव्याप्तिरित्याशङ्कां तन्मतानुसारेणैव निराकरोति व्यावर्त्तकस्यैवेति। इतरभेदानुमितिजनकस्यैवेत्यर्थः। इतरभेदविधेयकानुमितिजनकतावच्छेदकविषयताविशेषाश्रयस्येति यावत्। एतेन व्यावहारिकस्य व्यवच्छेदः। लक्षणत्वे गवादिलक्षणत्वे उक्तलक्षणलक्षणस्य लक्ष्यत्वे इति यावत्। लक्ष्यत्वे इति पाठेऽप्ययमेवार्थो बोध्यः। व्यावृत्ताविति। गवादीतरभेदे गोत्वादिरूपलक्ष्यतावच्छेदकसमनियतत्वस्य अभिधेयत्वप्रमेयत्वादौ पदार्थत्वसमनैयत्यस्य च सत्त्वेनातिव्याप्तिवारणाय। व्यावृत्त्यभिधेयत्वादिभिन्नत्वं लक्षणलक्षणे निवेशनीयम् इत्यर्थः। यद्यपि व्यावृत्तेरपि व्यावहारिकत्वस्य वक्ष्यमाणतया तेनैव रूपेण सर्वेषां संग्रहसम्भवात् पृथगभिधानमनुचितम्। तथापि हेतुसाध्ययोरैक्ये हेतुमत्तानिश्चयकाले साध्यसंशयरूपपक्षतया असत्त्वेन नानुमितिरिति प्राचीनमते इतरभेदस्य व्यावर्त्तकत्वाभावेन तत्रातिव्याप्तिः। सिषाधयिषाविरहविशिष्टसिद्ध्यभावः पक्षता इति सिद्धान्तिमते तु व्यावृत्तेरपि व्यावर्त्तकत्वेन लक्ष्यतया तत्र लक्षणसङ्गमनस्येष्टत्वेन नातिव्याप्तिरित्यावेदयितुं पृथक् कथनमिति ध्येयम्।



ननु किमिदं नाम लक्षणलक्षणलक्ष्यतावच्छेदकम् व्यावर्त्तकत्वं न तावत् सामान्यतो भेदानुमापकत्वम्। व्यावृत्त्यभिधेयत्वादेरपि यत् किञ्चित् उभयत्वाद्यवच्छिन्नप्रतियोगिताकभेदानुमापकत्वेन लक्षणलक्षणलक्ष्यतया तत्रातिव्याप्तिकथनासङ्गतेः। सर्वेषामपि व्यतिरेकि (व्यक्ति) धर्माणां यत् किञ्चिद्व्यावर्त्तकतया असाधारणघटकव्यापकत्वादिवैयर्थ्यापातात् च नापि विशिष्य तत्तद्धर्मावच्छिन्नेतरभेदानुमापकत्वम्। तथा सति गोत्वावच्छिन्नेतरभेदानुमापकस्य सास्नादिमत्त्वस्य गोत्वसमनियतत्वं लक्षणमित्येवंरीत्या विशिष्य तत्तल्लक्षणस्य वक्तव्यतया गोत्वादिरूपलक्ष्यतावच्छेदकतत्तद्धर्मसमनैयत्यस्य गोत्वावच्छिन्नेतरभेदादिरूपव्यावृत्तौ सत्त्वे नातिव्याप्तिः सम्भवेऽप्यभिधेयत्वादावतिव्याप्तिलक्षणाकलापत्तेर्दुर्वारत्वात् गोत्वादिसमनैयत्यस्य तत्रासत्त्वात् इति चेत्। नैवम्। यतः सास्नादिमत्त्वं पक्षीकृत्य गोत्वावच्छिन्नेतरभेदानुमापकत्वं साध्ये विशेषव्याप्तावन्वयदृष्टान्ताभावेन यद्धर्मसमनियतं तत्तद्धर्मावच्छिन्नव्यावर्त्तकम् इति रीत्या सामान्यमुखव्याप्तेरभ्युपगन्त-

व्यतया तत्र सिद्धसाधनाप्रसिद्धिभ्याम् अव्यावर्त्तकयोर्व्यावृत्त्यभिधेयत्वयोस्तत्तद्धर्म-समनैयत्यरूपप्रकृतहेतुतुल्यहेतोः सत्त्वेन प्रकृतसाध्यस्य तत्तुल्यस्य वा साध्यस्यास-त्वेन व्यभिचारः स्यात्। अतस्तद्दोषवारणाय तत्तद्धर्मावच्छिन्नेतरभेदरूपव्याव-र्त्तिभिन्नत्वमभिधेयत्वादिभिन्नत्वं च तादृशलक्षणे निवेशनीयं इत्यभिप्रायकोऽयं ग्रन्थ इति न पूर्वोक्तदोषावसरः। अधिकविचारस्तु अन्यत्रानुसन्धेयः। ननु लक्षणस्य व्यवहारोऽपि प्रयोजनम्। तेन रूपेण व्यवहर्त्तव्यज्ञानं विना तद्रूपावच्छिन्नबोधक-शब्दरूपव्यवहारासम्भवात्। एवञ्च व्यावहारिकलक्षणस्यापि लक्ष्यत्वात् तद्भिन्न-त्वविशेषणं न देयं इत्याह व्यवहारस्यापीति।

ननु व्यावृत्तावतिव्याप्तिवारणाय तद्भिन्नत्वमावश्यकम्। व्यावृत्तेर्व्यावहारिक-त्वाभावादिति भ्रमं वारयति। व्यावृत्तेरपीति। अपिना अभिधेयत्वादिपरिग्रहः दृष्टान्तलाभाय।

ननु आद्यलक्षणावच्छिन्ने द्रव्ये गुणवत्त्वस्यासत्त्वेऽपि कालान्तरावच्छिन्ने तत्र तत्स-त्त्वमक्षतम्। एवञ्च गुणाश्रयत्वं लक्षणं साधीय इत्यत आह उत्पन्नविनष्टेति। यादृशद्रव्यारम्भकसंयोगजनकक्रियोत्पत्तिः तृतीयक्षणेऽवयवान्तरे तादृशसंयोग-नाशिका क्रिया जाता तादृशे द्रव्य इत्यर्थः। नवीनाः पुनरसमवायिकारणस्य कार्य-सहभावेन कारणतामवलम्ब्य उत्पन्नविनष्टं नाङ्गीकुर्वन्ति। गुणादावतिव्याप्ति-वारणाय गुणसमानाधिकरणेति जातिविशेषणम्। सत्तामादायातिव्याप्तिवार-णाय सत्ताभिन्नेति। द्रव्यगुणान्यतरत्वमादायातिव्याप्तिवारणाय जातीति। समवायेन तादृशधर्मवत्त्वतात्पर्यग्राहकम्। अतः कालिकादिसम्बन्धेन तद्वत्त्वमादाय नातिव्याप्तिरिति भावः। एवमपि उक्तविवक्षया अव्याप्तिवारणेऽपि। एकार्थ-समवायादेवेति एकस्मिन्नर्थे समवायेन सत्त्वादेवेत्यर्थः। गुणानङ्गीकारादिति तथा च क्लृप्तेन समवायघटितसामानाधिकरण्येनैव गुणे गुणवत्ताव्यवहारोपपत्तौ तत्रा-क्लृप्तगुणवत्त्वकल्पनं न सम्भवति गौरवादिति भावः।

(इति द्रव्यविभागः)

**रूपरसगन्धस्पर्शसङ्ख्यापरिमाणपृथक्त्वसंयो-गविभागपरत्वापरत्वगुरुत्वद्रवत्वस्नेहशब्दबुद्धिसुख-दुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्काराश्चतुर्विंशतिगुणाः।**

गुणान् विभजते रूपेति। द्रव्यकर्मभिन्नत्वे सति सामान्यवान् गुणः। गुणत्वजातिमान् वा लघुत्वमृदुत्वकठिनत्वादीनां विद्यमानत्वात् कथं चतुर्विंशतिगुणा इति चेत्। न। लघुत्वस्य गुरुत्वाभावरूपत्वात् मृदुत्वकठिनत्वयोरवयवसंयोगविशेषरूपत्वात्।

सामान्यवानिति। सामान्यवत्त्वं समवायेन बोध्यम्। तेन न कालिकादिसम्बन्धेन तद्वति ध्वंसेऽतिव्याप्तिः। गुण इति लक्ष्यनिर्देशः। लाघवादाह—गुणत्वजातिमान् वेति। यद्यपि लक्षणलक्ष्यतावच्छेदकयोरभेदः तथापि लक्षणेनेतरभेदे साध्ये हेतौ साध्यसामानाधिकरण्यनिश्चयेऽपि हेतुधर्मितावच्छेदकसाध्यनिश्चयस्यानियतत्वाभिप्रायेणेदम् इति संक्षेपः। एवमग्रेऽपि बोध्यम्। गुणत्वजातिसिद्धिस्तु गुणपदशक्यतावच्छेदकतयेति गुणदीधितौ भट्टाचार्याः। न चैवं विभुपदशक्यतावच्छेदकतया विभुत्वमपि जातिः सिध्येदिति वाच्यम्। भूतत्वसङ्करस्य बाधकस्य सत्त्वेन तस्य जातित्वासम्भवात्। जातित्वाभिमतसङ्करस्यैवं जातित्वबाधकत्वात् तथा चोक्तं द्रव्यकिरणावल्यामुदयनाचार्यैः।

व्यक्तेरभेदस्तुल्यत्वं सङ्करोऽथानवस्थितिः।
रूपहानिरसम्बन्धो जातिबाधकसंग्रहः॥

व्यक्तेरभेदः—स्वाश्रयव्यक्तेरैक्यम् आकाशत्वादेर्जातित्वे बाधकम्। व्यक्तेस्तुल्यत्वं—च अन्यूनानतिरिक्तव्यक्तिकत्वम्। घटत्वकलशत्वयोर्भिन्नजातित्वे। सङ्करः—परस्परात्यन्ताभावसमानाधिकरणयोर्धर्मयोरेकत्र समावेशः। भूतत्वमूर्त्तत्वादेर्जातित्वे। अनवस्था—जातित्वादेः जातित्वे। रूपहानिः—स्वतो व्यावर्त्तकत्वात्मकरूपस्य हानिः विशेषत्वस्य जातित्वे। असम्बन्धः असमवेतत्वम् अभावत्वादेर्जातित्व इति संक्षेपः। लघुत्वादीनां प्रामाणिकत्वेऽपि क्लृप्तेष्वन्तर्भावो न्याय्य इति समाधत्ते लघुत्वस्येति।

( इति गुणविभागः )

उत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनानि पञ्च कर्माणि।

कर्म विभजते उत्क्षेपणेति। संयोगभिन्नत्वे सति संयोगासमवायिकारणम् कर्मत्वजातिमद् वा।

ननु भ्रमणादेरप्यतिरिक्तस्य कर्मणः सत्त्वात् पञ्चेत्यनुपपन्नमिति चेत्। न। भ्रमणादीनामपि गमनेऽन्तर्भावात् न पञ्चत्वविरोधः।

( इति कर्मविभागः )

संयोगासमवायिकारणे संयोगेऽतिव्याप्तिवारणाय संयोगभिन्नत्वे सतीति। संयोगासमवायिकारणद्रव्येऽतिव्याप्तिवारणाय असमवायीति। भ्रमणादेरित्यादिना रेचनस्यन्दनोर्ध्वज्वलनतिर्य्यग्गमनादीनां संग्रहः। गमनेऽन्तर्भावादिति। नचोत्क्षेपणादीनामपि गमने अन्तर्भावोऽस्त्विति शङ्कनीयम्। स्वतन्त्रेच्छस्य नियोगपर्य्यनुयोगानर्हस्य ऋषेः सम्मतत्वादिति भावः।

( इति कर्मविभागः )



परमपरं चेति द्विविधं सामान्यम्।

सामान्यं विभजते परमिति। परमधिकदेशवृत्ति। अपरं न्यूनदेशवृत्ति। सामान्यादिचतुष्टये जातिर्नास्ति।

( इति सामान्यविभागः )

परमित्यादि। लक्षणमग्रे मूलकृतैव वक्ष्यत इति न न्यूनतेति बोध्यम्। सत्ताया द्रव्यत्वाद्यपेक्षया अधिकदेशवृत्तित्वेन परत्वमेव। घटत्वादीनां न्यूनवृत्तित्वेन अपरत्वमेव। द्रव्यादीनां सत्तातोऽपरत्वम् घटत्वादितः परत्वम् इति विवेकः।

( इति सामान्यविभागः )

नित्यद्रव्यवृत्तयो विशेषास्त्वनन्ता एव।

विशेषं विभजते नित्येति। पृथिव्यादिचतुष्टयस्य परमाणवः आकाशादिपञ्चकम् नित्यद्रव्याणि।

( इति विशेषविभागः )

समवायस्त्वेक एव।

समवायस्य भेदो नास्तीत्याह समवायस्त्विति ।

( इति समवायविभागः )

समवायस्य भेदो नास्तीति । न च समवायस्याभेदे स्पर्शसमवायवति वायौ रूपवत्त्वाप्रतीतिः स्यात् इति शङ्कनीयम् । रूपसमवायसत्त्वेऽपि रूपाभावेन तथा प्रतीतेरभावादिति दिक् ।

( इति समवायविभागः )

अभावश्चतुर्विधः प्रागभावः प्रध्वंसाभावोऽत्यन्ताभावोऽन्योन्याभावश्चेति ।

( इत्यभावविभागः )

अभावं विभजते । अभावइति । इत्यभावविभागः । इत्युद्देशग्रन्थः ।

तत्र गन्धवती पृथिवी । सा द्विविधा नित्या अनित्या च । नित्या परमाणुरूपा अनित्या कार्य्यरूपा ।



तत्रोद्देशक्रमानुसारेण प्रथमं पृथिव्याः लक्षणमाह । गन्धवतीति । नाम्ना पदार्थसङ्कीर्त्तनमुद्देशः । उद्देशक्रमे च सर्वत्र इच्छैव नियामिका । ननु सुरभ्यसुरभ्यवयवारब्धे द्रव्ये परस्परविरोधेन गन्धानुत्पादादव्याप्तिः । न च तत्र गन्धप्रतीत्यनुपपत्तिरिति वाच्यम् । अवयवगन्धस्यैव तत्र भानसम्भवेन चित्रगन्धानङ्गीकारात् । किञ्चोत्पन्नविनष्टघटादावव्याप्तिरिति चेन्न । गन्धसमानाधिकरणद्रव्यत्वापरजातिमत्त्वस्य विवक्षितत्वात् । ननु जलादावपि गन्धप्रतीतेरतिव्याप्तिरिति चेन्न । अन्वयव्यतिरेकाभ्यां पृथिवीगन्धस्यैव तत्र भानाङ्गीकारात् । ननु तथापि कालस्य सर्वाधारतया सर्वेषां लक्षणानां तत्रातिव्याप्तिरिति चेन्न । सर्वाधारताप्रयोजकसम्बन्धभिन्नसम्बन्धेन

लक्षणस्याभिमतत्वात्। पृथिवीं विभजते। सा द्विविधेति। नित्यत्वं ध्वंसाप्रतियोगित्वम्। ध्वंसप्रतियोगित्वमनित्यत्वम्।

पृथिवीलक्षणस्य प्राथम्ये बीजमाह। तत्रेति। पृथिव्यादिषु मध्य इत्यर्थः। गन्धसमवायिकारणतावच्छेदकतया पृथिवीत्वजातिसिद्धिरिति बोध्यम्। नामेति। अत्र तृतीयार्थोऽभेदः सङ्कीर्त्तनपदार्थे प्रतिपादकशब्देऽन्वेति। तथा च वस्तुप्रतिपादकनाममात्रमुद्देश इति लक्षणं पर्य्यवस्यति। अत्र घट इति लौकिकपदेऽतिव्याप्तिवारणाय वस्तुपदं लक्षणीयवस्तुपरम्। लक्षणीयस्य पृथिव्यादेः सामान्यतः प्रतिपादके प्रमेयपदेऽतिव्याप्तिवारणाय नामपदं लक्ष्यतावच्छेदकावच्छिन्नपरम् लक्षणवाक्ये नामसत्त्वादतिव्याप्तिरतो मात्रपदमिति ध्येयम्। आरब्धे जन्ये। परस्परविरोधेनेति। सुरभिगन्धं प्रति असुरभिगन्धस्य असुरभिगन्धं प्रति सुरभिगन्धस्य प्रतिबन्धकत्वेनेत्यर्थः। प्रतीत्यनुपपत्तेरिति। अतश्चित्रगन्ध एव अप्रतिबध्यः स्वीकर्त्तव्य इति भावः। अवयवगन्धस्यैवेति। स्वाश्रयसमवेतत्वसम्बन्धेनेत्यादिः। तुष्यतु दुर्जन इति न्यायेनाङ्गीकृत्याह। किञ्चेति। जलत्वादिकमादायातिव्याप्तेर्वारणाय 'गन्धसमानाधिकरणे'ति। सत्तावारणाय 'द्रव्यत्वापरे'ति द्रव्यत्वन्यूनवृत्तीत्यर्थकम्। तेन द्रव्यत्वव्युदासः। गन्धप्रतीतेरिति। सुरभि जलमित्यादिप्रतीतेरित्यर्थः। पृथिवीगन्धस्यैवेति। स्वाश्रयसंयुक्तत्वसम्बन्धेनेत्यादिः। तत्र जलादौ। यथाश्रुतग्राही कश्चन शङ्कते। ननु तथापीति। अनुगतरूपेण लक्षणताघटकसम्बन्धान्निवेश्य कालादावतिव्याप्तिं वारयति। सर्वाधारतेति। वस्तुतस्तु समवायादीनां समवायत्वादिनैव संसर्गतया तेनैव रूपेण तत्सम्बन्धस्य तत्तल्लक्षणघटकत्वं बोध्यम्। नित्यपृथिवीत्वादिरूपलक्षणगतनित्यत्वादि प्रदर्शयति। नित्यत्वमिति।

पुनस्त्रिविधा शरीरेन्द्रियविषयभेदात्। शरीरमस्मदादीनाम्। इन्द्रियं गन्धग्राहकं घ्राणं नासाग्रवर्त्ति। विषयो मृत्पाषाणादि।

प्रकारान्तरेण विभजते। पुनरिति। आत्मनो भोगायतनं शरीरम्। यदवच्छिन्नात्मनि भोगो जायते तद्भोगायतनं

तदेव शरीरम्। सुखदुःखान्यतरसाक्षात्कारो भोगः। शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञानकारणमनःसंयोगाश्रयत्वम् इन्द्रियत्वम्। शरीरेन्द्रियभिन्नो विषयः। एवञ्च गन्धवच्छरीरं पार्थिवशरीरम्, गन्धवदिन्द्रियं पार्थिवेन्द्रियम्, गन्धवान् विषयः पार्थिवविषय इति तल्लक्षणं बोध्यम्। पार्थिवं शरीरं दर्शयति। शरीरमिति इन्द्रियं दर्शयति इन्द्रियमिति। गन्धग्राहकमिति। प्रयोजनकथनम्। घ्राणमिति संज्ञा। नासाग्रेत्याश्रयोक्तिः। एवमुत्तरत्र ज्ञेयम्। पार्थिवविषयं दर्शयति। मृत्पाषाणेति।

प्रकारान्तरेणेति। पृथिवीमित्यनुषज्यते। अत्र नित्यपृथिव्याः शरीरेन्द्रियभिन्नत्वरूपविषयलक्षणान्तर्गतत्वेन विषयान्तर्गतत्वमिति पृथिव्यास्त्रिविधत्वम्। अत एव मूले पुनस्त्रिविधेत्युक्तिः सङ्गच्छते इति ध्येयम्। केचित्तु अनित्यपृथिव्या एव त्रैविध्यं वर्णयन्ति। उद्देशक्रमानुसारेण प्रथमं शरीरलक्षणमाह—आत्मन इति। आयतनमवच्छेदकम्। तथा च यादृशं लक्षणं सम्पन्नं तादृशमाह—यदवच्छिन्न इति। सुखदुःखान्यतरसाक्षात्कारावच्छेदकमिति यावत्। अन्त्यावयवित्वे सतीति विशेषणं देयम्। तेन पादादीनामवच्छेदकत्वेऽपि तत्र नातिव्याप्तिः। शरीरत्वं तु न जातिः पृथिवीत्वादिना सङ्करात्। तथा इन्द्रियत्वं न जातिरित्याशयेनाह—शब्देतरोद्भूतेति। आत्मादावतिव्याप्तिवारणाय सत्यन्तम्। श्रोत्रेऽतिव्याप्तिवारणाय शब्देतरेति। चक्षुरादौ विशेषगुणस्यानुद्भूतरूपादेः सत्त्वेनाव्याप्तिवारणायोद्भूतेति। उद्भूतत्वं न जातिः। शुक्लत्वादिना सङ्करात्। न च शुक्लत्वादिव्याप्यं नानैवोद्भूतत्वमिति वाच्यम्। चाक्षुषादावुद्भूतरूपत्वादिना कारणत्वानुपपत्तेः। किन्तु यच्छुक्लत्वादिव्याप्यमनुद्भूतत्वं नाना तत्तदभावकूटवत्त्वमुद्भूतत्वम् तच्च संयोगादावपि। तथा शब्देतरोद्भूतगुणं संयोगमादाय असम्भवस्य वारणाय विशेषेति। कालादावतिव्याप्तिवारणाय विशेष्यदलम्। तत्रैवातिव्याप्तिवारणाय ज्ञानकारणेति। प्राचीनमते विषयावयवेन्द्रियावयवसंयोगस्य प्रत्यक्षजनकतया तदाश्रयस्य इन्द्रियावयवस्य, नवीनमते कालादौ रूपाद्यप्रत्यक्षे सन्निकर्षघटकतया कारणीभूतचक्षुःसंयोगाश्रयस्य कालादेश्च वारणाय

मनःपदम्। न चात्मान्यत्वे सतीत्यनेनैवात्मनि अतिव्याप्तिवारणसम्भवे किं गुरुतरेण शब्देतरोद्भूतेत्यादिविशेषणेनेति वाच्यम्। तथा सति चर्ममनःसंयोगस्य ज्ञानमात्रं प्रति हेतुत्वमते तत्रातिव्याप्तेरित्यलमतिविस्तरेण। एवञ्चेति। तत्तदर्थस्य शरीरादिसामान्यलक्षणत्वं चेत्यर्थः।

ननु गन्धवत्त्वप्रवेशेनैव तल्लक्षणस्य सामञ्जस्ये गन्धग्राहकत्वनिवेशमनुचितम् एवञ्च 'इन्द्रियं गन्धग्राहकम्' इति मूलमनुपपन्नमित्याशङ्कां परिजिहीर्षुस्तत् मूलं तत्प्रयोजनकथनपरतया व्याचष्टे गन्धग्राहकमिति। उत्तरत्र 'इन्द्रियं रसग्राहकम्' इत्यादौ।

( इति पृथिवी )

शीतस्पर्शवत्य आपः। ता द्विविधाः नित्या अनित्याश्च। नित्याः परमाणुरूपाः। अनित्याः कार्य्यरूपाः। पुनस्त्रिविधाः शरीरेन्द्रियविषयभेदात्। शरीरं वरुणलोके। इन्द्रियं रसग्राहकं रसनं जिह्वाग्रवर्त्ति। विषयः सरित्समुद्रादि।



अपां लक्षणमाह शीतेति। उत्पन्नविनष्टे जलेऽव्याप्तिवारणाय शीतस्पर्शसमानाधिकरणद्रव्यत्वापरजातिमत्त्वे तात्पर्य्यम्। 'शीतं शिलातलम्' इत्यादौ जलसम्बन्धादेव शीतस्पर्शभानमिति नातिव्याप्तिः। अन्यत् सर्वं पूर्वरीत्या व्याख्येयम्।

शीतस्पर्शसमानाधिकरणेति। तत्र विशेषेण प्रयोजनं पूर्वोक्तरीत्या ऊह्यम्। जलत्वजातिसिद्धिस्तु स्नेहजनकतावच्छेदकतयेति ध्येयम्। अन्यत् सर्वं पूर्वरीत्येति। नित्यत्वादिकम्। जलशरीरादिलक्षणं च गन्धवत्त्वस्थाने शीतस्पर्शवत्त्वं निवेश्य 'पृथिवीनिरूपणोक्तरीत्या' इत्यर्थः। एवमग्रेऽप्यूह्यम्।

( इति जलम् )

उष्णस्पर्शवत्तेजः। तद्द्विविधम् नित्यमनित्यञ्च।

नित्यं परमाणुरूपम्। अनित्यं कार्य्यरूपम्। पुनस्त्रिविधम् शरीरेन्द्रियविषयभेदात्। शरीरमादित्यलोके। इन्द्रियं रूपग्राहकं चक्षुः कृष्णताराग्रवर्त्ति। विषयश्चतुर्विधः भौमदिव्योदर्य्याकरजभेदात्। भौमं वह्न्यादिकम्। अबिन्धनं दिव्यं विद्युदादि। भुक्तस्य परिणामहेतुरुदर्य्यम्। आकरजं सुवर्णादि।

तेजसो लक्षणमाह उष्णस्पर्शवदिति। 'उष्णं जलम्' इति प्रतीतिस्तेजःसम्बन्धानुविधायित्वात् नातिव्याप्तिः। विषयं विभजते भौममिति। ननु 'सुवर्णं पार्थिवम् पीतत्वाद्गुरुत्वात् हरिद्रावत्' इति चेत्। न। अत्यन्तानलसंयोगे सति घृतादौ द्रवत्वनाशदर्शनेन, जलमध्यस्थघृते द्रवत्वनाशादर्शनेन, असति प्रतिबन्धके पार्थिवद्रवत्वनाशाग्निसंयोगयोः कार्य्यकारणभावावधारणात्। सुवर्णस्य अत्यन्तानलसंयोगे सति अनुच्छिद्यमानद्रवत्वाधिकरणत्वेन पार्थिवत्वानुपपत्तेः। तस्मात् पीतद्रव्यद्रवत्वनाशप्रतिबन्धकतया द्रवद्रव्यान्तरसिद्धौ नैमित्तिकद्रवत्वाधिकरणतया जलत्वानुपपत्तेः। रूपवत्तया वाय्वादिषु अनन्तर्भावात् तैजसत्वसिद्धिः। तस्योष्णस्पर्शभास्वररूपयोरुपष्टम्भकपार्थिवरूपस्पर्शाभ्यां प्रतिबन्धात् अनुपलब्धिः। तस्मात् सुवर्णं तैजसमिति सिद्धम्।



सूत्रे अबिन्धनमिति। आप एव इन्धनमुद्दीपनं यस्य तदित्यर्थः। भुक्तस्येति। भुक्तस्यौदनादेः परिणामः परिपाकः, तत्र हेतुरित्यर्थः। आकरजमिति। आकरः खनिस्तत्र जातमित्यर्थः।

सुवर्णस्य तैजसत्वं व्यवस्थापयितुं प्रकृते दीपिकायां नन्विति। पार्थिवत्व-

साधकं पीतत्वहेतुमुक्त्वा तैजसत्वाभावसाधकं हेतुमाह गुरुत्वादिति। एतेन सुवर्णरूपतेजसि विजातीयपीतरूपं स्वीक्रियते 'पीतं सुवर्णम्' इत्यबाधितप्रत्यक्षप्रतीतिसत्त्वात्। एवं तैजसत्वस्य निर्बाधतया पृथिवीत्वं न सिध्यतीति कस्यचित् भ्रान्तिर्निरस्ता। गुरुत्वस्याप्रत्यक्षत्वेन तथा वक्तुं अशक्यत्वात् इति दिक्। सुवर्णस्य पीतिमगुरुत्वाश्रयतोऽतिरिक्तत्वं व्यवस्थापयिष्यन् वक्ष्यमाणानुमाने अप्रयोजकत्वशङ्कावारणाय कार्य्यकारणभावमनुकूलतर्कं व्यवस्थापयति अत्यन्तानलेति। सुवर्णस्येत्यादिः। अनुमानप्रयोगस्तु इत्थमवसेयः 'सुवर्णम् अपार्थिवम् असति प्रतिबन्धके अत्यन्तानलसंयोगे सति अनुच्छिद्यमानद्रवत्वाधिकरणत्वात् यन्नैवं तन्नैवम् यथा पृथिवी'। जलमध्यस्थघृतादौ व्यभिचारवारणाय 'असति प्रतिबन्धके' इति। अग्निसंयोगासमानाधिकरणद्रवत्ववति घृतादौ व्यभिचारवारणाय अत्यन्तानलसंयोगे सतीति। द्रवद्रव्यान्तरसिद्धाविति। 'अत्यन्तानलसंयोगी पीतिमाश्रयः द्रवत्वनाशकप्रतिबन्धकद्रवद्रव्यान्तरसंयुक्तः अत्यन्तानलसंयोगेऽप्यनुच्छिद्यमानद्रवत्वाधिकरणे सति गुरुत्वात् जलमध्यस्थघृतादिवत्' इत्यनुमानेन तत्सिद्धिर्द्रष्टव्या। जलादिकमादाय अनुमानपर्य्यवसानं वारयति नैमित्तिकेति। ननु 'उष्णस्पर्शभास्वररूपोपलब्ध्यभावेन सुवर्णस्य तैजसत्वम् अनुपपन्नम्' इत्यत आह तस्येति। प्रतिबन्धादिति। दोषविधयेत्यादिः।



(इति तेजः)

रूपरहितस्पर्शवान् वायुः। स द्विविधः नित्योऽनित्यश्च। नित्यः परमाणुरूपः। अनित्यः कार्य्यरूपः। पुनस्त्रिविधः शरीरेन्द्रियविषयभेदात्। शरीरं वायुलोके। इन्द्रियं स्पर्शग्राहकं त्वक् सर्वशरीरवर्त्ति। विषयो वृक्षादिकम्पनहेतुः। शरीरान्तःसञ्चारी वायुः प्राणः। स चैकोऽप्युपाधिभेदात् प्राणापानादिसंज्ञां लभते।

वायुं निरूपयति। रूपरहितेति। आकाशादावति-

व्याप्तिवारणाय स्पर्शवानिति। पृथिव्यादावतिव्याप्तिवारणाय रूपरहितेति।

ननु प्राणस्य कुत्रान्तर्भाव इत्यत आह शरीरेति। स चेति। एक एव प्राणः स्थानभेदात् प्राणापानादिशब्दैर्व्यवह्रियत इत्यर्थः।

स्पर्शानुमेयो वायुः। तथा हि 'योऽयं वायौ वाति सति अनुष्णाशीतस्पर्शो भासते, स स्पर्शः क्वचिदाश्रितः गुणत्वात् रूपवत्'। न चास्य पृथिवी आश्रयः, उद्भूतस्पर्शवतः पार्थिवस्योद्भूतरूपवत्त्वनियमात्। न जलतेजसी, अनुष्णाशीतत्वात्। न विभुचतुष्टयम्, सर्वत्रोपलब्धिप्रसङ्गात्। न मनः, परमाणुस्पर्शस्यातीन्द्रियत्वात्। तस्माद् यः प्रतीयमानस्पर्शाश्रयः स वायुः। ननु 'वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वात् घटवत्' इति चेत्। न। उद्भूतरूपत्वस्योपाधित्वात्। 'यत्र द्रव्यत्वे सति बहिरिन्द्रियप्रत्यक्षत्वं, तत्र उद्भूतरूपवत्त्वम्' इति घटादौ साध्यव्यापकत्वम्। पक्षे साधनाव्यापकत्वम्। न चैवं तप्तवारिस्थतेजसोऽपि अप्रत्यक्षत्वापत्तिः। इष्टत्वात्। तस्मात् रूपहितत्वात् वायुरप्रत्यक्षः।

शरीरेति। तथा च प्राणस्य विषयेऽन्तर्भावः। स्थानभेदादिति।

हृदि प्राणो गुदेऽपानः समानो नाभिसंस्थितः।
उदानः कण्ठदेशे स्याद् व्यानः सर्वशरीरगः॥

इति स्थानभेदादित्यर्थः। मुखनासिकाभ्यां निष्क्रमणप्रवेशनात् प्राणः। मलादीनाम् अधोनयनात् अपानः। आहारेषु पाकार्थं वह्नेः समुन्नयनात् समानः। ऊर्ध्वनयनात् उदानः। नाडीमुखेषु वितननाद् व्यानः।

स्वमतं दर्शयति स्पर्शानुमेय इति। अस्येति। उपलभ्यमानस्पर्शस्य आश्रयः पृथिवी न चेत्यन्वयः। चतुष्टयमिति। इदमाकाशादिप्रत्येकभेदसाधनाभिप्रायेण। सर्वत्रोपलब्धिप्रसङ्गादिति। स्पर्शस्येत्यादिः। आकाशादीनां विभु-

त्वादिति भावः। प्रत्यक्षः वहिरिन्द्रियजन्यप्रत्यक्षविषयः। अनुद्भूतस्पर्शाश्रये त्वगिन्द्रिये व्यभिचारवारणाय प्रत्यक्षेति। उपाधित्वादिति। तथा च हेतौ उपाधिव्यभिचारेण साध्यव्यापकत्वात् कथं तस्योपाधित्वम् इत्यत आह यत्रेत्यादिना। तथा च पक्षधर्मावच्छिन्नसाध्यव्यापकोऽयमुपाधिरिति भावः। एवं प्रत्यक्षस्पर्शाश्रयस्याप्युद्भूतरूपाभावेन प्रत्यक्षत्वानङ्गीकारे। अप्रत्यक्षत्वापत्तिः। तच्च उद्भूतरूपादिभावादिति भावः।

( इति वायुः )

इदानीं कार्य्यरूपपृथिव्यादिचतुष्टयस्योत्पत्तिविनाशक्रमः कथ्यते। ईश्वरस्य चिकीर्षावशात् परमाणुषु क्रिया जायते। ततः परमाणुद्वयसंयोगे सति द्व्यणुकमुत्पद्यते। त्रिभिर्द्व्यणुकैः त्र्यणुकम्। एवं चतुरणुकादिक्रमेण महापृथिवी, महत्य आपः, महत् तेजः, महान् वायुः, उत्पद्यते। एवमुत्पन्नस्य कार्य्यद्रव्यस्य सञ्जिहीर्षावशात् क्रियया परमाणुद्वयविभागे सति द्व्यणुकनाशः। ततः त्र्यणुकस्य ततश्चतुरणुकस्य इत्येवं पृथिव्यादिनाशः। परमाण्वाख्यस्य समवायिकारणस्य नित्यत्वात् असमवायिकारणनाशाद्द्व्यणुकनाशः। समवायिकारणनाशात् त्र्यणुकनाश इति सम्प्रदायः। सर्व्वत्र असमवायिकारणनाशाद् द्रव्यनाश इति नवीनाः। किं पुनः परमाणुसद्भावे प्रमाणम्। उच्यते। जालसूर्य्यमरीचिस्थं सूक्ष्मतमं यद् दृश्यते तत् सावयवं चाक्षुषद्रव्यत्वात् पटवत्। त्र्यणुकावयवोऽपि सावयवः महदारम्भकत्वात् तन्तुवत्। यो द्व्यणुकावयवः स एव परमाणुः। स च नित्यः। कार्य्यत्वेऽनवस्थाप्रसङ्गात्। तथा च मेरुसर्षपयोरपि तुल्यपरिमाणापत्तेः। सृष्टिप्रलयसद्भावे किं प्रमाणमिति चेत्। न। 'धाता यथापूर्व्वमकल्पयत्' इति श्रुतिः प्रमाणम्। 'सर्व्वकार्य्यद्रव्यध्वंसोऽवान्तरप्रलयः। सर्व्वभावकार्य्यध्वंसो महाप्रलयः' इति विवेकः।

ननु परमाणुपुञ्जस्यैव घटादिरूपत्वेन अतिरिक्तावयविनोऽसत्त्वात् पृथिव्यादिचतुष्टयस्य नित्यत्वानित्यत्वाभ्यां विभागकथनमनुपपन्नम् इत्याशङ्कां वारयति इदानीमिति। पृथिव्यादिचतुष्टयनिरूपणानन्तरमित्यर्थः। द्व्यणुकस्य नाश इत्यस्य परमाणुद्वयसंयोगनाशादित्यादिः। सर्वत्रेति। जन्यद्रव्यसामान्य इत्यर्थः। सर्वत्र एकरीतिरेवोचितेति भावः।

चाक्षुषद्रव्यत्वादिति। चाक्षुषत्वे सति द्रव्यत्वात् इत्यर्थः। रूपादौ आत्मनि च व्यभिचारवारणाय विशेष्यविशेषणे। न चेदमप्रयोजकमिति शङ्कयम्। चाक्षुषं प्रति कारणस्य महत्त्वस्य त्रुटावपेक्षिततया सावयवत्वं विना अवयवसंख्याजन्यस्य तस्य स्वीकर्त्तुमशक्यत्वादिति संक्षेपः। यत्किञ्चिद्द्रव्यध्वंसस्येदानीमपि सत्त्वात्। सर्वेति। नित्यद्रव्याणां ध्वंसासम्भवात् कार्य्येति। परमाणुनिष्ठरूपादीनां तदानीमपि सत्त्वात् द्रव्येति। ध्वंसानां ध्वंसासम्भवेन महाप्रलये सत्त्वात् भावेतीति दिक्। इति कार्य्योत्पत्तिविनाशक्रमः।

## शब्दगुणकमाकाशम्। तच्चैकं विभु नित्यञ्च।

आकाशं लक्षयति। शब्दगुणकमिति। ननु किम् आकाशं पृथिव्यादिवन्नाना नेत्याह। तच्चैकमिति। भेदे प्रमाणाभावादित्यर्थः। एकत्वादेव सर्वत्र शब्दोपलब्धेः विभुत्वमङ्गीकर्त्तव्यमित्याह। विभु इति। सर्वमूर्त्तद्रव्यसंयोगित्वं विभुत्वम्। मूर्त्तत्वम् परिच्छिन्नपरिमाणवत्त्वं क्रियावत्त्वं वा। विभुत्वादेव आत्मवत् नित्यत्वम् इत्याह नित्यञ्चेति।

'शब्दगुणकम्' इत्यत्र शब्दवदिति वक्तव्ये तथा कथनम् 'आकाशे शब्द एव विशेषगुणः' इति सूचनाय। घटाकाशो मठाकाश इत्यादिव्यवहारस्योपाधिकत्वे नासाधकत्वात् आकाशस्यानेकत्वे प्रमाणं नेत्याह—भेद इति। एकत्वादिति। आकाशस्येत्यादिः। ननु एकत्वेऽप्यविभुत्वमस्तु अत आह—सर्वत्रेति। सर्वदिगवच्छेदेनेत्यर्थः। परिच्छिन्नपरिमाणवत्त्वमिति। यदि 'परिच्छिन्नत्वस्यापकर्षाश्रयत्वात्मकतया परमाणोरणुतरत्वेन द्व्यणुकपरिमाणापेक्षया परमाणुपरिमाणस्यापकृष्टत्वाभावात् परमाण्वव्याप्तमिदं लक्षणम्' इत्युच्यते तदाप्याह क्रियावत्त्वमिति। वस्तुतस्तु 'लाघवमेवोत्तरकल्पनानुसरणबीजम्' इति ध्येयम्।

(इत्याकाशम्)

अतीतादिव्यवहारहेतुः कालः। स चैको विभुर्नित्यश्च।

कालं लक्षयति। अतीतेति। सर्वाधारः कालः सर्वकार्य्य-निमित्तकारणञ्च।

'अतीतादिव्यवहारहेतुः कालः' इति मूले आदिना अनागतादिपरिग्रहः। अतीतत्वं वर्त्तमानध्वंसप्रतियोगित्वम्। वर्त्तमानत्वम् इह शब्दप्रयोगाधिकरणकालवृत्तित्वम्। भविष्यत्त्वम् च वर्त्तमानप्रागभावप्रतियोगित्वम्। अत्र सर्वत्र कालस्य घटकतया शब्दप्रयोगरूपातीतादिव्यवहारहेतुत्वं तस्येति ध्येयम्। न च तादृशव्यवहारः सूर्य्यपरिस्पन्दादिरूपोपाधिमादायापि सम्भवतीति वाच्यम्। अनुगतव्यवहारस्यानुगतविषयं विना असम्भवेनातिरिक्तकालस्वीकारात् इति दिक्। सर्वाधार इति। 'कालिकसम्बन्धेन' इत्यादिः। अत्र भिन्नकालिकयोराधाराधेयभावविरहात् क्रियादेः सर्वाधारत्वशङ्कैव नावतरतीति भावः।

( इति कालः )

प्राच्यादिव्यवहारहेतुर्दिक्। सा चैका विभ्वी नित्या च॥

दिशो लक्षणमाह। प्राचीति। दिगपि कार्य्यमात्रे निमित्तकारणम्।

प्राच्यादिव्यवहारहेतुरिति मूले—आदिना प्रतीच्यादिपरिग्रहः। उदयाचलसन्निहितमूर्त्तावच्छिन्ना दिक् प्राची। तद्व्यवहितमूर्त्तावच्छिन्ना च प्रतीची। मेरुसन्निहितमूर्त्तावच्छिन्ना दिग् उदीची। तद्व्यवहितमूर्त्तावच्छिन्ना तु दक्षिणा।

( इति दिक् )

ज्ञानाधिकरणमात्मा। स द्विविधः परमात्मा जीवात्मा चेति। तत्रेश्वरः सर्वज्ञः परमात्मैक एव। जीवात्मा प्रतिशरीरं भिन्नो विभुर्नित्यश्च।

आत्मनो लक्षणमाह। ज्ञानेति। आत्मनं विभजते सद्वि-

विध इति। परमात्मनो लक्षणमाह तत्रेति। नित्यज्ञानाधिकरणत्वम् ईश्वरत्वम्। ननु ईश्वरस्य सद्भावे प्रमाणं किम्? न तावत् प्रत्यक्षम्। तद्धि बाह्यम्, आभ्यन्तरं वा। नाद्यः, अरूपिद्रव्यत्वात्। नान्त्यः, आत्मसुखादिव्यतिरिक्तत्वात्। नाप्यनुमानम्, लिङ्गाभावात्। नाप्यागमः, तथाविधागमाभावात् इति चेत्। न। 'क्षित्यङ्कुरादिकं कर्तृजन्यं कार्यत्वात् घटवत्' इत्यनुमानस्य प्रमाणत्वात्। उपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्त्वम् कर्तृत्वम्। उपादानं समवायिकारणम्। सकलपरमाण्वादिसूक्ष्मदर्शित्वात् सर्वज्ञत्वम्। 'यः सर्वज्ञः स सर्ववित्' इत्यागमोऽपि प्रमाणम्।

ज्ञानाधिकरणमिति। समवायेन ज्ञानवदित्यर्थः। तत्र तयोर्मध्ये। दीपिकायाम् नित्यज्ञानाधिकरणमिति। नच 'नित्यं ज्ञानमानन्दं ब्रह्म' इति श्रुत्या विरोध इति वाच्यम्। आनन्दपदस्यानन्दवदर्थकताया इव विज्ञानपदस्यापि विज्ञानवदर्थकतास्वीकारेणाविरोधात्। न च आनन्दस्यैव तादृशार्थकत्वम् असिद्धम् इति वाच्यम्। अर्श आद्यजन्तत्वाङ्गीकारेण तादृशार्थसिद्धेः। अन्यथा। नपुंसकत्वानुपपत्तेः। अत्रानन्दो भारापगमे 'सुखी संवृत्तोऽहम्' इतिवद् दुःखाभावे उपचर्य्यते। नवीनास्तु नित्यत्वमीश्वरस्याङ्गीकुर्वन्तीत्यलमधिकजल्पनेन।

अरूपिद्रव्यत्वात् इति। बाह्यप्रत्यक्षं प्रति उद्भूतरूपस्य हेतुत्वादिति भावः। आत्मसुखादिव्यतिरिक्तेति। विजातीयात्ममनःसंयोगादिरूपस्य मानसप्रत्यक्षहेतोरीश्वरेऽभावात् इति भावः। प्रमाणत्वादिति। नचेदमप्रयोजकमिति शङ्क्यम्। कार्य्यत्वावच्छिन्नं प्रति कृतित्वावच्छिन्नस्य हेतुत्वेनाप्रयोजकत्वाभावात् इति दिक्। उपादानगोचरेति। यद्यपि कर्तृत्वं कृतिमत्त्वमेव सम्भवति। तथाप्यपरोक्षज्ञानादेश्चिकीर्षादिकं प्रति कारणत्वप्रदर्शनाय तथोक्तिरित्यवधेयम्। सर्वविदिति। विद्धातोर्वर्त्तमाने विशेषरूपेण ज्ञानम्।

जीवलक्षणमाह जीवेति। सुखादिकं जीवलक्षणम्। ननु 'मनुष्योऽहं ब्राह्मणोऽहम्' इत्यादौ सर्वत्राहंप्रत्यये शरीरस्यैव विषयत्वाच्छरीरमेवात्मेति चेत्। न। शरीरस्य करपादादिनाशे

शरीरनाशादात्मनोऽपि नाशापत्तेः। नापि इन्द्रियाणामात्मत्वम्। तथात्वे 'योऽहं घटमद्राक्षं सोऽहं इदानीं स्पृशामि' इत्यनुसन्धानाभावप्रसङ्गात्। अन्यानुभूतेऽन्यस्यानुसन्धानायोगात्। तस्माद्देहेन्द्रियव्यतिरिक्तो जीवः सुखादिवैचित्र्यात् प्रतिशरीरं भिन्नः। स च न परमाणुपरिमाणः, शरीरव्यापिसुखाद्यनुपलब्धिप्रसङ्गात्। न मध्यमपरिमाणः, तथा सति अनित्यत्वप्रसङ्गेन कृतहानाकृताभ्यागमप्रसङ्गात्। तस्मात् नित्यो विभुर्जीवः।

लक्षणमाहेति। स्वरूपमाहेत्यर्थः। मूले जीवः प्रतिशरीरं भिन्न इति। न च अवयवोपचयापचयाभ्यां तत्तच्चैत्रादिशरीराणां विभिन्नत्वेऽपि जीवभेदाभावात् इदमसङ्गतम्। एवं कायव्यूहस्थलेऽपि इति वाच्यम्। समानकालिकयोगजधर्माजन्यशरीरभेदेन जीवभेदस्यैव विवक्षितत्वेनादोषात्, एवं चैतच्छरीरावच्छिन्नभोगवान् समानकालिकयोगाद्यजन्यशरीरावच्छिन्नभोगवद्भिन्न इति रीत्या प्रतिशरीरं जीवभेदः साध्य इत्यलम्।

शरीरस्यैवेति। अन्यथा मनुष्यत्वादीनां शरीरधर्मत्वेन तथा प्रत्ययस्यैवासङ्गतिरित्यभिमानः। नाशापत्तेरिति। समवायिकारणनाशस्य द्रव्यनाशकत्वात् इति भावः। योऽहमिति। भूतकालिकदर्शनवति वर्तमानकालिकस्पार्शनवत्त्वं प्रत्याय्यते, तच्च भवतां मते न सम्भवति चाक्षुषस्पार्शनवतोर्भेदात् इति। अनुसन्धानायोगादिति। अन्यथा चैत्रेणानुभूतस्य वस्तुनो मैत्रेण स्मरणापत्तेरिति भावः।

ननु शरीरावच्छेदेनात्मनि सुखादिसाक्षात्कारोपपत्तये सर्वव्यापित्वम् आत्मनोऽस्तु। तथापि विभुत्वाङ्गीकारे प्रयोजनाभाव इत्याशयेनाशङ्कते न मध्यमेति। अनित्यत्वप्रसङ्गेनेति। 'यत् मध्यमपरिमाणं तदनित्यम्' इति व्याप्तेरिति भावः। कृतेति। कृतस्य यागादिना सम्पादितस्य धर्मादेर्हानं नाशः' अकृतस्याभ्यागमः प्राप्तिस्तत्प्रसङ्गात् इत्यर्थः। कर्तुरात्मनि उत्तरजन्मनि असत्त्वात् अकर्तुश्च सत्त्वात् इति भावः। ननु जीवस्य अणुत्वमेवास्ताम्, तावता नोक्तदोषः। सूक्ष्मस्य दीपस्य सर्वगृहावच्छेदेनेवाणुरूपस्यापि जीवस्य सर्वशरीरावच्छेदेन प्रभाप्रसरणाङ्गीकारात् इति चेत्। न। तथा सति कायव्यूहस्थले सुखादिसाक्षात्कारानुत्पत्तेरिति दिक्।

(इत्यात्मा)

**सुखाद्युपलब्धिसाधनमिन्द्रियं मनः। तच्च प्रत्यात्मनियतत्वात् अनन्तम् अणुरूपं नित्यञ्च।**

मनसो लक्षणमाह सुखेति। स्पर्शरहितत्वे सति क्रियावत्त्वं मनसो लक्षणम्। मनो विभजते तच्चेति। एकैकं मन एकैकस्यात्मन आवश्यकमित्यात्मनामनेकत्वान्मनसोऽप्यनेकत्वमित्यर्थः। अणुरूपमिति। मध्यमपरिमाणवत्त्वे अनित्यत्वप्रसङ्गादित्यर्थः।

ननु मनो विभु स्पर्शरहितद्रव्यत्वात् आकाशादिवदिति चेत्। न। मनसो विभुत्वे आत्ममनःसंयोगस्यासमवायिकारणस्याभावात् ज्ञानानुत्पत्तिप्रसङ्गात्। न च विभुद्वयसंयोगोऽस्त्विति वाच्यम्। तत्संयोगस्य नित्यत्वेन सुषुप्त्यभावप्रसङ्गात् पुरीतद्व्यतिरिक्तप्रदेशात्ममनःसंयोगस्य सर्वदा विद्यमानत्वात्। अणुत्वे तु यदा मनः पुरीतति नाड्यां प्रविशति, तदा सुषुप्तिः। यदा निःसरति, तदा ज्ञानोत्पत्तिरित्यणुत्वसिद्धिः।

मनःसंयोगाद्यतिव्याप्तिवारकेन्द्रियत्वघटितमूलोक्तलक्षणापेक्षया लघुलक्षणमाह —स्पर्शरहितत्वे सतीति। एकैकं मन इति। सर्वात्मनाम् एकस्य मनसः स्वीकारे एकस्य ज्ञानदशायामपरस्य तदनुत्पत्तिः तस्याणुत्वेन सकलेन्द्रियैरेकदा संयोगाभावादिति भावः। अभावादिति। विभुद्वयसंयोगानभ्युपगमादिति भावः। ज्ञानानुत्पत्तीति। भावकार्यस्यासमवायिकारणजन्यत्वनियमादिति भावः। विभुद्वयसंयोगोऽस्त्विति। तस्य नित्यत्वे नासमवायिकारणक्रियाद्यसत्त्वेऽपि न क्षतिरिति भावः।

इति द्रव्यनिरूपणम्।

अथ गुणनिरूपणम्

**चक्षुर्मात्रग्राह्यो गुणो रूपम्। तच्च शुक्लनीलपीतरक्तहरितकपिशचित्रभेदात् सप्तविधम्।**

पृथिवीजलतेजोवृत्ति। तत्र पृथिव्यां सप्तविधम्। अभास्वरं शुक्लं जले। शुक्लं भास्वरं तेजसि।

रूपं लक्षयति चक्षुरिति। संख्यादावतिव्याप्तिवारणाय मात्रपदम्। रूपत्वेऽतिव्याप्तिवारणाय गुणपदम्। प्रभाभित्ति-संयोगेऽतिव्याप्तिवारणाय चक्षुर्मात्रग्राह्यजातिमत्त्वं वाच्यम्। रूपं विभजति तच्चेति। ननु अव्याप्यवृत्तिनीलादिसमुदाय एव चित्ररूपमिति चेत्। न। रूपस्य व्याप्यवृत्तित्वनियमात्। ननु चित्रपटे अवयवरूपस्य प्रतीतिरस्त्विति चेत्। न। रूप-रहितत्वेन पटस्याप्रत्यक्षत्वप्रसङ्गात्। न च रूपवत्समवेतत्वं प्रत्यक्षत्वप्रयोजकम्। गौरवात्। तस्मात् पटस्य प्रत्यक्षत्वानु-पपत्त्या चित्ररूपसिद्धिः। रूपस्याश्रयमाह—पृथिवीति। आश्रयं विभज्य दर्शयति—तत्रेति।

मात्रपदमिति। यद्यपि चक्षुर्मात्रग्राह्यत्वं चक्षुरितराग्राह्यत्वे सति चक्षुर्ग्राह्यत्वम्। तच्च रूपे न सम्भवति। तथापि त्वगिन्द्रियाग्राह्यत्वे सति चक्षुर्ग्राह्यत्वं तदिति ध्येयम्। गुणपदमिति। नचैवमपि प्रभाभित्तिसंयोगेऽतिव्याप्तिरिति वाच्यम्। त्वगग्राह्यचक्षुर्ग्राह्यगुणविभाजकधर्मवत्त्वे पर्य्यवसानेनादोषात्। अतएव न परमाणुरूपादावव्याप्तिरिति ध्येयम्। समुदाय एवेति। एवकारेणातिरिक्त-चित्ररूपव्यवच्छेदः। व्याप्यवृत्तित्वेति। देशिकव्याप्यवृत्तित्वेत्यर्थः। इदमुपल-क्षणम्। एकैकचित्ररूपस्थलेऽनेकरूपाणामेकैकतत्प्रागभावादिस्थले च अनेक-प्रागभावादीनां कल्पनेन, अनेकरूपेषु 'चित्रः' इत्याकारकप्रतीतिविषयत्वकल्पने, च गौरवमिति। रूपरहितत्वेनेति। समवायेनेत्यादिः। प्रसङ्गादिति। द्रव्य-चाक्षुषं प्रति समवायेनैव रूपस्य कारणत्वमिति भावः। रूपवत्समवेतत्वं स्वाश्रयसमवेतत्वसम्बन्धेन रूपम्। प्रत्यक्षत्वप्रयोजकमिति। 'प्रत्यक्षविषयत्वप्रयो-जकमस्तु' इत्यर्थः। गौरवादिति। साक्षात्सम्बन्धेन कारणत्वापेक्षया गौरवा-दित्यर्थः। चित्रावयवकपालैरारब्धघटस्य चाक्षुषत्वानुरोधेन स्वसमवायिसमवेतत्व सम्बन्धेनैव रूपस्य तत्प्रयोजकत्वमङ्गीकर्त्तव्यम्। एवं च त्रुटेश्चाक्षुषत्वानुपपत्तिरपि

द्रष्टव्या। प्रत्यक्षत्वानुपपत्त्येति। एतेन चित्ररूपवत् चित्ररसोऽपि सिध्येत् इति शङ्का निरस्ता। द्रव्यलौकिकरासनस्याप्रसिद्धया तदनुपपत्त्यभावेन चित्ररसासिद्धेरिति संक्षेपः।

( इति रूपम् )

रसनग्राह्यो गुणो रसः। स च मधुराम्ललवणकटुकषायतिक्तभेदात् षड्विधः। पृथिवीजलवृत्तिः। पृथिव्यां षड्विधः। जले मधुर एव।

रसं लक्षयति—रसनेति। रसत्वेऽतिव्याप्तिवारणाय गुणपदम्। तस्याश्रयमाह—पृथिवीति। आश्रयं विभज्य दर्शयति पृथिव्यामिति।

रसत्व इति। रसनाग्राह्यगुणविभाजकोपाधिमत्त्वे तात्पर्यम्। एवं गन्धलक्षणेऽपि।

( इति रसः )



घ्राणग्राह्यो गुणो गन्धः। स च द्विविधः सुरभिरसुरभिश्च। पृथिवीमात्रवृत्तिः।

गन्धं लक्षयति—घ्राणेति। गन्धत्वेऽतिव्याप्तिवारणाय गुणपदम्।

( इति गन्धः )

त्वगिन्द्रियमात्रग्राह्यो गुणः स्पर्शः। स त्रिविधः शीतोष्णानुष्णाशीतभेदात्। पृथ्वीजलतेजोवायुवृत्तिः। तत्र शीतो जले, उष्णस्तेजसि, अनुष्णाशीतः पृथिवीवाय्वोः।

स्पर्शं लक्षयति—त्वगिति। स्पर्शत्वेऽतिव्याप्तिवारणाय गुणपदम्। संयोगादावतिव्याप्तिवारणाय मात्रपदम्।

ग्राह्यपदमिति। 'चक्षुरग्राह्यत्वगिन्द्रियग्राह्यगुणविभाजकोपाधिमत्त्वम्' इति तु फलितोऽर्थः।

[ इति स्पर्शः ]

**रूपादिचतुष्टयं पृथिव्यां पाकजमनित्यं च। अन्यत्रापाकजं नित्यमनित्यं च। नित्यगतं नित्यम्। अनित्यगतमनित्यम्।**

पाकजमिति। पाकस्तेजःसंयोगः, तेन पूर्वरूपं नश्यति रूपान्तरमुत्पद्यते इत्यर्थः। अत्र परमाणुष्वेव पाको न द्व्यणुकादौ। आमपाकनिक्षिप्ते घटे परमाणुषु रूपान्तरोत्पत्तौ श्यामघटनाशे पुनर्द्व्यणुकादिक्रमेण रक्तघटोत्पत्तिः। तत्र परमाणवः समवायिकारणम्, तेजःसंयोगोऽसमवायिकारणम्, अदृष्टादिकं निमित्तकारणम्, द्व्यणुकादिरूपे कारणरूपमसमवायिकारणमिति पीलुपाकवादिनो वैशेषिकाः। पूर्वघटनाशं विनैव अवयविनि अवयवेषु परमाणुपर्यन्तेषु च युगपद्रूपान्तरोत्पत्तिरिति पिठरपाकवादिनो नैयायिकाः। अत एव पार्थिवपरमाणुरूपादिकमनित्यमित्यर्थः। अन्यत्र जलादावित्यर्थः। नित्यगतमिति। परमाणुगतमित्यर्थः। अनित्यगतमिति। द्व्यणुकादिनिष्ठमित्यर्थः। रूपादिचतुष्टयम् उद्भूतं प्रत्यक्षम्। अनुद्भूतमप्रत्यक्षम्। उद्भूतत्वं प्रत्यक्षत्वप्रयोजको धर्मः। तदभावोऽनुद्भूतत्वम्।



परमाणुषु एव पाक इति। परमाणुषु एव पूर्वरूपपरावृत्त्यादिजनकतेजःसंयोग इत्यर्थः। एवकारव्यवच्छेद्यं स्फुटयति न द्व्यणुकादाविति। आमपाकनिक्षिप्ते घटे इति। घटे आमपाकनिक्षिप्ते सति श्यामघटनाशे परमाणुषु रूपान्तरोत्पत्तौ इत्यर्थः। तच्च परमाणुरूपे। अवयविनि पाकानङ्गीकारादाह कारणरूपमिति। परमाणुष्वेव पाकं वदतां वैशेषिकाणामयमाशयः—वेगातिशयवता तेजसा परमाणूनामभिघातसंयोगे सति अवश्यं तेषु क्रिया जायते। ततो विभागः

तत आरम्भकसंयोगनाशे सति अवश्यं यावदवयविनाशः, ततः स्वतन्त्रेषु परमाणुषु रूपान्तरोत्पत्तौ पुनरदृष्टादिघटितसामग्रीवशात्परमाणुषु क्रियाविभागादिक्रमेण यथास्थितमहावयविपर्य्यन्तमुत्पत्तिरिति। अवयविन्यपि पाकं वदतां नैयायिकानां तु अयमाशयः—तेजसा परमाणूनामभिघातसंयोगेऽपि तस्य नियमत आरम्भकसंयोगप्रतिद्वन्द्विविभागजनकक्रियाजनकत्वे मानाभावेन अवयविन्यपि पाकस्वीकार उचितः। अतएव 'सोऽयं घटः' इति प्रत्यभिज्ञा सङ्गच्छते। अनन्तावयविनाशादिकल्पने लाघवञ्चेति। न च अवयविरूपं प्रति अवयवरूपस्य, तन्नाशं प्रति आश्रयनाशस्य, हेतुतायां व्यभिचार इति वाच्यम्। कार्य्यतावच्छेदककोटौ वैजात्यनिवेशेन व्यभिचारवारणसम्भवात्।

* जलादावित्यर्थ इति। यद्यपि रूपादिचतुष्टयं जलादौ बाधितम्। तथापि यथायोग्यमन्वये तात्पर्य्यम्। उद्भूतमिति। उद्भूतत्वं जातिः। न च शुक्लत्वादिना साङ्कर्य्यम्। 'गुणसाङ्कर्य्यं न बाधकम्' इति नवीनमताभिप्रायकोऽयं ग्रन्थ इति न दोषः। केचित्तु शुक्लत्वादिव्याप्यमनुद्भूतत्वं नाना, तदभावकूटवत्त्वमेवोद्भूतत्वमित्याहुः।

( इति पाकविचारः )

**एकत्वादिव्यवहारहेतुः संख्या। नवद्रव्यवृत्तिः। एकत्वादिपरार्धपर्य्यन्ता। एकत्वं नित्यमनित्यं च। नित्यगतं नित्यम्। अनित्यगतमनित्यम्। द्वित्वादिकं तु सर्वत्रानित्यमेव।**

संख्यां लक्षयति एकेति।

मूले द्वित्वादिकं तु सर्वत्रानित्यमेवेति। हेतुभूतापेक्षाबुद्धिनाशेन द्वित्वनाशादिति भावः।

( इति संख्या )

**मानव्यवहारासाधारणं कारणं परिमाणम्। नवद्रव्यवृत्ति। तच्चतुर्विधम् अणु, महत्, दीर्घं, ह्रस्वं चेति।**

परिमाणं लक्षयति—मानेति। परिमाणं विभजते तच्चेति।

भावप्रधानो निर्देशः अणुत्वं, महत्त्वं, दीर्घत्वं ह्रस्वत्वं, चेत्यर्थः।

परिमाणस्य गुणविबोधकशब्दैर्विभजनमसङ्गतमतो दीपिकायां भावप्रधाननिर्देश इति।

( इति परिमाणम् )

पृथग्व्यवहारासाधारणं कारणं पृथक्त्वम्। सर्वद्रव्यवृत्ति।

पृथक्त्वं लक्षयति—पृथगिति। 'इदमस्मात् पृथक्' इति-व्यवहारकारणमित्यर्थः।

( इति पृथक्त्वम् )

संयुक्तव्यवहारहेतुः संयोगः। सर्वद्रव्यवृत्तिः।

संयोगं लक्षयति—संयुक्तेति। 'इमौ संयुक्तौ' इति व्यवहारहेतुरित्यर्थः। सङ्ख्यादिलक्षणेषु सर्वत्र दिक्कालादावतिव्याप्तिवारणाय असाधारणेति देयम्। संयोगो द्विविधः—कर्मजः संयोगजश्च। आद्यो हस्तक्रियया पुस्तकसंयोगः। द्वितीयो हस्तपुस्तकसंयोगात् कायपुस्तकसंयोगः। अव्याप्यवृत्तिः संयोगः। स्वात्यन्ताभावसमानाधिकरणत्वम्—अव्याप्यवृत्तित्वम्।

असाधारणेतीति। कालादेः साधारणकारणत्वेन तत्र नातिव्याप्तिरिति भावः। स्वात्यन्ताभावेति। स्वप्रतियोगित्वस्वसमानाधिकरणोभयसम्बन्धेनाभाववत्त्वमिति तु निष्कर्षः।

( इति संयोगः )

संयोगनाशको गुणो विभागः। सर्वद्रव्यवृत्तिः।

विभागं लक्षयति संयोगेति। कालादावतिव्याप्तिवारणाय गुण इति। रूपादावतिव्याप्तिवारणाय संयोगनाशक इति। विभागोऽपि द्विविधः। कर्मजो विभागजश्च। आद्यो हस्त-

आश्रयासिद्धो यथेति। आश्रयासिद्धिश्च पक्षे पक्षतावच्छेदकविरहः। पक्षतावच्छेदकविरहवान् पक्षो वा। स च नास्त्येवेति। अरविन्दस्य प्रसिद्धत्वात् 'सविशेषणे हि' इति न्यायेनारविन्दे गगनीयत्वं नास्तीति पर्यवसितोऽर्थः। स्वरूपासिद्धिश्च पक्षे हेत्वभावो, हेत्वभाववान् पक्षो वा।

सोपाधिको व्याप्यत्वासिद्धः। साध्यव्यापकत्वे सति साधनाव्यापकत्वमुपाधिः। साध्यसमानाधिकरणात्यन्ताभावाप्रतियोगित्वं साध्यव्यापकत्वम्। साधनवन्निष्ठात्यन्ताभावप्रतियोगित्वम् साधनाव्यापकत्वम्। यथा पर्वतो धूमवान् वह्निमत्त्वात् इत्यत्रार्द्रेन्धनसंयोग उपाधिः। तथाहि यत्र धूमस्तत्रार्द्रेन्धनसंयोग इतिसाध्यव्यापकत्वम्। यत्र वह्निस्तत्रार्द्रेन्धनसंयोगो नास्ति अयोगोलके आर्द्रेन्धनाभावात् इति साधनाव्यापकत्वम्। एवं साध्यव्यापकत्वे सति साधनाव्यापकत्वात् आर्द्रेन्धनसंयोग उपाधिः सोपाधिकत्वाद् वह्निमत्त्वं व्याप्यत्वासिद्धम्।

व्याप्यत्वासिद्धस्य लक्षणमाह सोपाधिक इति। उपाधेर्लक्षणमाह साध्येति। उपाधिश्चतुर्विधः केवलसाध्यव्यापकः पक्षधर्मावच्छिन्नसाध्यव्यापकः, साधनावच्छिन्नसाध्यव्यापकः, उदासीनधर्मावच्छिन्नसाध्यव्यापकश्चेति। आद्यः आर्द्रेन्धनसंयोगः। द्वितीयो यथा 'वायुः प्रत्यक्षः प्रमेयत्वात्' इत्यत्र बहिर्द्रव्यत्वावच्छिन्नप्रत्यक्षव्यापकमुद्भूतरूपवत्त्वम्। तृतीयो यथा

'ध्वंसाभावो विनाशी जन्यत्वात्' इत्यत्र जन्यत्वावच्छिन्नानित्यत्वव्यापकं भावत्वम्। चतुर्थस्तु प्रागभावो विनाशी प्रमेयत्वात् इत्यत्र जन्यत्वावच्छिन्नानित्यत्वव्यापकम् भावत्वम्।

ननु सोपाधिकस्य अतिरिक्तस्य सद्भावात् कथं पञ्च हेत्वाभासा इत्यत आह सोपाधिक इति। व्याप्यत्वासिद्धिः व्याप्त्यभावः। तस्याः सोपाधिकहेतौ नियमेन सत्त्वात् सोपाधिको व्याप्यत्वासिद्ध एव न तु अतिरिक्तः हेत्वाभास इति भावः। उपाधेर्दोषत्वमसम्भवीति दीपिकायां व्यक्तीभविष्यत्यग्रे। अतेदमवधेयम्। साध्ये साध्यतावच्छेदकाभावः साध्याप्रसिद्धिः। हेतौ हेतुतावच्छेदकाभावः साधनाप्रसिद्धिः। यथा काञ्चनमयवह्निमान् काञ्चनधूमात् इत्यादौ तदग्रहदशायां हेतुतावच्छेदकविशिष्टे साध्यतावच्छेदकविशिष्टव्याप्तिग्रहप्रतिबन्धः फलम्। तयोर्व्याप्यत्वासिद्धावन्तर्भावान्न हेत्वाभासाधिक्यमिति। साध्यव्यापकत्वसाधनाव्यापकत्वे एकरूपेण एकसम्बन्धेन च बाध्ये तेन 'वह्निमान् धूमात्' इत्यादौ तत्तद्वह्नौ वह्नित्वेन साध्यव्यापकस्य तत्तद्वह्नित्वेन च साधनाव्यापकत्वस्य सत्त्वेऽपि आलोके संयोगेन साध्यव्यापकत्वस्य समवायेन च साधनाव्यापकस्य सत्त्वेऽपि च नातिव्याप्तिः। मूलोक्त उपाधिलक्षणस्य अव्याप्तिं वारयितुं लक्ष्यलक्षणभेदं प्रदर्शयति उपाधिश्चतुर्विध इति। यद्धर्मविशिष्टसाध्यव्यापकत्वं तद्धर्मविशिष्टसाधनाव्यापकत्वं लक्षणे निवेशनीयम्। अन्यथा पर्वतत्वात्मकपक्षधर्मविशिष्टवह्निव्यापकत्वस्य कस्यचित् धूमत्वावच्छिन्नाव्यापकत्वादतिव्याप्तिः स्यादिति ध्येयम्। उदासीनेति। पक्षधर्मसाधनधर्माभ्यां भिन्नेत्यर्थः। बहिर्द्रव्यत्वम् आत्मान्यद्रव्यत्वम् इद केवलप्रत्यक्षत्वस्यैव साध्यत्वानुसारेण। प्रागभावो विनाशी जन्यत्वादिति। अत्र जन्यत्वं पक्षधर्मो न भवतीति साधनावच्छिन्नसाध्यव्यापकत्वघटितलक्षणम्। अनित्यत्वव्यापकमिति। विनाशित्वव्यापकत्वमित्यर्थः। जन्यत्वस्योदासीनत्वं सम्पादयितुं प्रमेयत्वादिति।

यस्य साध्याभावः प्रमाणान्तरेण निश्चितः स बाधितः यथा वह्निरनुष्णो द्रव्यत्वादिति। अत्रानुष्णत्वं साध्यं, तदभाव उष्णत्वं स्पर्शेन प्रत्यक्षेण गृह्यत इति बाधितत्वम्। व्याख्यातमनुमानम्।

बाधितलक्षणमाह यस्येति। अत्र बाधस्य साध्याभाव-

निश्चयत्वेन, सत्प्रतिपक्षस्य विरोधिज्ञानसामग्रीत्वेन साक्षादनुमितिप्रतिबन्धकत्वम्। इतरेषां परामर्शप्रतिबन्धकत्वम्। तत्रापि साधारणस्याव्यभिचाराभाववत्तया, विरुद्धस्य सामानाधिकरण्याभाववत्तया, व्याप्यत्वासिद्धस्य विशिष्टव्याप्त्यभाववत्तया, असाधारणानुपसंहारिणोर्व्याप्तिसंशयाधायकत्वेन व्याप्तिज्ञानप्रतिबन्धकत्वम्। आश्रयासिद्धस्वरूपासिद्धयोः पक्षधर्मताज्ञानप्रतिबन्धकत्वम् उपाधिस्तु व्यभिचारज्ञानद्वारा व्याप्तिज्ञानप्रतिबन्धकः। सिद्धसाधनन्तु पक्षताविघटकतया आश्रयासिद्धे अन्तर्भवतीति प्राञ्चः। निग्रहस्थानान्तरमिति नवीनाः। इति तर्कदीपिकायाम् अनुमानं समाप्तम्।

बाधस्य साध्याभाववत्तानिश्चयस्य। ग्राह्याभावनिश्चयत्वेन इति। अनुमितिप्रतिबन्धकत्वमित्यनेनान्वयि। विरोधिज्ञानसामग्रीत्वेनेति। इदं प्राचीनमते। वस्तुतस्तु विरोधिपरामर्शस्य साध्याभावव्याप्यवत्तानिश्चयत्वेनैव प्रतिबन्धकत्वं लाघवात्। इतरेषाम्। व्यभिचारादिग्रहाणाम्। तत्रापि। व्यभिचारादिग्रहेष्वपि। साधारणस्येति। भावप्रधाननिर्देशतया साधारण्यस्य इत्यर्थः। अव्यभिचाराभाववत्तया। तद्ग्रहस्येति शेषः। व्याप्तिज्ञानप्रतिबन्धकत्वमित्यनेनान्वयः। एवमग्रेऽपि हेतौ साध्याभाववद्वृत्तित्वस्यैव साध्यतावच्छेदके हेतुसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकत्वस्यापि व्यभिचारतया तद्ग्रहस्य हेतुसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकत्वाभावरूपो यो व्यभिचारः तद्ग्रहप्रतिबन्धकत्वमिति भावः। हेतौ साध्याभाववद्वृत्तित्वप्रकारकग्रहस्य व्याप्तिग्रहप्रतिबन्धकत्वं तु मणिमन्त्रादिन्यायेन। विशिष्टव्याप्त्यभाववत्तया हेतुव्यापकतावच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्याभावरूपतया। व्याप्तिसंशयाधायकत्वेनेति। हेतौ असाधारण्यादिज्ञानदशायां हेतुसाध्ययोः सामानाधिकरण्यनिश्चयासम्भवेन पक्षान्तर्भावेण च साध्यसंशयत्वेन व्याप्तिसंशयसम्भवान्न व्याप्तिनिश्चय इति प्राचीनमतमभिप्रेत्येदम्। पक्षधर्मताज्ञानप्रतिबन्धकत्वमिति। पक्षे पक्षतावच्छेदकविरहस्य च निश्चयदशायां हेतौ पक्षतावच्छेदकविशिष्टपक्षवृत्तित्वग्रहासम्भवादिति भावः।

ननु पक्षत्वोक्तिरसङ्गता हेतौ उपाधिग्रहदशायामपि व्याप्तिनिश्चयासम्भवेन उपाधिज्ञानस्य व्याप्तिनिश्चयप्रतिबन्धकतया अवश्यं वक्तव्यतया उपाधेरपि हेत्वाभास-

लक्षणाक्रान्तत्वादत आह उपाधिस्तु इति। व्यभिचारज्ञानद्वारेति। तथा च हेत्वाभासलक्षणे साक्षादनुमितितत्करणान्यतरप्रतिबन्धकत्वस्यैव निवेशनीयतया परमुखनिरीक्षकस्योपाधेर्न हेत्वाभासत्वमिति भावः।

ननु तथापि सिद्धिसत्त्वेऽनुमित्यनुदयात् तद्विषयस्य साध्यवत्पक्षस्यापि हेत्वाभासत्वमावश्यकमित्याशङ्कां जरन्नैयायिकमतमवलम्ब्येष्टापत्त्या परिहरति सिद्धसाधनं त्विति। पक्षताविघटकतयेति। तन्मते पक्षतायाः साध्यसंशयरूपतया तद्विघटकत्वं साध्यनिश्चयस्याक्षतमिति भावः। अन्तर्भवतीति। तथा च न विभागव्याघात इति भावः। दर्शितमतमतिशिथिलमित्यालोच्याह निग्रहेति। न च सिद्धान्तेऽनुमितिं प्रति सिद्धेः प्रतिबन्धकतया तद्विषयस्य कथं हेत्वाभासता नेति वाच्यम्। सिषाधयिषायाः सिद्धिनिष्ठप्रतिबन्धकतायाम् उत्तेजकतया केवलं सिषाधयिषासहितसिद्धौ प्रतिबन्धकत्वाभावेन तद्विषयहेत्वाभासलक्षणासंस्पर्शादिति। अधिकमस्मदीयाभिनवदीधितिव्याख्यायां तर्ककर्कशविचारचातुरीधुरीणैरनुसन्धेयम्।

इति तर्कसंग्रहदीपिकाप्रकाशे भगवदर्पिते अनुमानपरिच्छेदः समाप्तः।

---



अथ उपमानम्।

**उपमितिकरणमुपमानम्। संज्ञासंज्ञिसम्बन्धज्ञानमुपमितिः। तत्करणं सादृश्यज्ञानम्। तथा हि कश्चिद्गवयशब्दवाच्यमजानन् कुतश्चित् आरण्यकपुरुषाद् 'गोसदृशो गवयः' इति श्रुत्वा वनं गतो वाक्यार्थं स्मरन् गोः सदृशं पश्यति। तदनन्तरम् 'अयं गवयशब्दवाच्यः' इत्युपमितिरुत्पद्यते इत्युपमानम्।**

उपमानं लक्षयति। उपमितीति।

उपमानं लक्षयति। अवसरसङ्गत्योपमानं निरूपयतीत्यर्थः। उपमितिरूपं व्युत्पादयति मूले संज्ञेति। संज्ञा गवयपदम्। संज्ञी गवयः। तयोः सम्बन्धः

शक्तिः तज्ज्ञानमित्यर्थः । लक्षणन्तु उपमिनोमीत्यनुव्यवसायगम्योपमितित्वम् एवेति ध्येयम् । वाक्यार्थं स्मरन् गोः सदृशं पश्यतीति । एतेन स्मरणं सादृश्यदर्शनजन्यं उद्बोधकान्तरजन्यं वा । उभयमपि सादृश्यदर्शनस्य सहकारि, न तु सादृश्यदर्शनजन्यमेव स्मरणं सहकारीति सूचितम् । प्राञ्चस्तु 'वाक्यार्थं स्मरन्' इत्यत्र वर्त्तमानसामीप्ये प्रत्ययः । वाक्यार्थं स्मरिष्यन् इत्यर्थः । एवञ्च वाक्यार्थस्मरणस्य सादृश्यदर्शनजन्यतालाभेन व्यापारतालाभ इत्याहुः । उपमितीति । तदनन्तरम् इत्यादिसादृश्यदर्शनानन्तरम् । गवयो गवयपदवाच्य इत्याकारिका गवयत्वाच्छेपलघुधर्मधर्मितावच्छेदकोपमितिरुत्पद्यते इत्यर्थः । इदमुपलक्षणम् । वैधर्म्यदर्शनेनाप्युपमितिरिति ध्येयम् । वैशेषिकास्तु । पदवाच्यत्वव्याप्यसादृश्यपरामर्शात् पदवाच्यत्वस्य अनुमितिरेव । अतो नोपमानं प्रमाणान्तरमित्याहुः । तत् चिन्त्यम् । व्याप्तिज्ञानमन्तरेणापि पदवाच्यत्वप्रमितेरनुभवसिद्धत्वादित्यन्यत्र विस्तरः ।

इति तर्कसंग्रहदीपिकाप्रकाशे भगवद्दर्पिते उपमानपरिच्छेदः समाप्तम् ।

———

अथ शब्दः ।



आप्तवाक्यम् शब्दः । आप्तस्तु यथार्थवक्ता । वाक्यम् पदसमूहः । यथा गामानय शुक्लां दण्डेनेति ।

शब्दं लक्षयति आप्तेति । वाक्यं लक्षयति वाक्यमिति ।

शब्दं लक्षयतीति । उपजीव्योपजीवकभावसङ्गत्या शब्दं निरूपयतीत्यर्थः । अत्र ज्ञायमानशब्दस्य शब्दप्रमाणतया शब्दे उपमानोपजीवकत्वाभावात् उपमिति—शाब्दबोधरूपफलयोः सङ्गतिर्बोध्या । तथा हि शक्तिपरिच्छित्तिरेवोपमितिः । तस्याश्च शब्दबोधोपजीव्यत्वेन फलयोरुपजीव्योपजीवकत्वसम्भवः । तादृशसङ्गतेश्च फलनिष्ठत्वेऽपि स्वाश्रयकरणत्वात्मकपरम्परासम्बन्धेन करणनिष्ठत्वात् करणयोरनन्तराभिधानप्रयोजकत्वम् । शब्दज्ञानस्य प्रमाणत्वाङ्गीकर्त्तृनवीनमते तु उपमितेः शक्तपदविषयकत्वेन शब्दप्रमाणतया तत्र च उपमानजन्यत्वस्याक्षततया स्वरूपयोरपि सङ्गतिरिति मन्तव्यम् । मूले आप्तवाक्यं शब्द इति । शब्द इति लक्ष्य-

निर्देशः। प्रमाणशब्द इत्यर्थः। आप्तवाक्यमिति लक्षणम्। भवति हि पयसा सिञ्चतीत्यादिशब्दः आप्तोक्तवाक्यम्। न तु वह्निना सिञ्चतीत्यादिशब्दः। तदुच्चारणकर्त्तुः यथार्थवक्तृत्वरूपाप्तत्वाभावात्। प्रकृतवाक्यार्थगोचरमयथार्थज्ञानजन्यवाक्यम् प्रमाणशब्द इति तु निष्कर्षः। वाक्यप्रयोगे वाक्यार्थज्ञानस्य हेतुत्वाल्लक्षणसङ्गतिः। स्फुटमेतत् शब्दमणौ।

**शक्तं पदम्। अस्मात्पदादयमर्थो बोद्धव्य इतीश्वरसङ्केतः शक्तिः।**

**पदलक्षणमाह शक्तमिति। अर्थस्मृत्यनुकूलपदार्थसम्बन्धः शक्तिः। सा च पदार्थान्तरमिति मीमांसकाः तन्निरासार्थमाह अस्मादिति। डित्यादीनामिव घटादीनामपि सङ्केत एव शक्तिः न तु पदार्थान्तरमित्यर्थः।**

मीमांसकमतनिरासकत्वेनाग्रिममूलमवतारयितुं तन्मतसाधारण्येन शक्तिपदार्थमाह अर्थस्मृत्यनुकूलेति। शाब्दबोधजनकार्थस्मृत्यनुकूलो घटादिपदघटादिरूपार्थयोः सम्बन्धः शक्तिरित्यर्थः। अनुकूलत्वम् इह प्रयोजकत्वम्। तच्च कारणतावच्छेदके पदपदार्थसम्बन्धेऽप्यक्षतम्। घटादिपदतदर्थयोरन्यसम्बन्धवारणाय अनुकूलान्तं विवक्षितार्थकम्। अन्यसम्बन्धज्ञानस्यार्थस्मृतिजनकत्वेऽपि शाब्दबोधजनकस्मृतिजनकत्वाभावात्। अर्थस्मृत्यनुकूलत्वस्यादृष्टादिसाधारण्यात् विशिष्यमिति बोध्यम्। पदार्थान्तरमिति। तत्तत्पदार्थतावच्छेदकाभावकूटवदित्यर्थः। तेन अतिरिक्तपदार्थत्वस्यान्यमताप्रसिद्धत्वेऽपि न व्याघातः। 'अस्मात्पदादयम् इत्यादिमूलस्य एतत्पदजन्यबोधविषयोऽयमर्थः' इत्याकारकेश्वरेच्छा शक्तिरित्यर्थः। न तु पदार्थान्तरमिति। न च ईश्वरीयज्ञानस्येच्छायाः कृतेर्वा शक्तिरूपत्वमिति विनिगमनाविरहादतिरिक्तैव शक्तिरिति वाच्यम्। आधुनिकसङ्केतस्येच्छारूपतया शक्तेरपि इच्छारूपत्वे सङ्केतज्ञानस्यानुगतकार्यकारणभावः सम्भवति नान्यथा इत्येवं विनिगमकसम्भवेन इच्छाया एव शक्तित्वस्वीकारात्। न च भगवदिच्छायाः सकलविषयिण्याः शक्तित्वस्वीकारे घटबोद्धव्यत्वप्रकारकतदिच्छायाः पटेऽपि सत्त्वात् घटपदवाच्यत्वस्यातिप्रसङ्गः एवं गङ्गापदजन्यबोधविषयत्वप्रकारकेच्छायाः तीरेऽपि सत्त्वेन शक्त्यैव तद्बोधसम्भवे लक्षणोच्छेदापत्तिरिति वाच्यम्। यतः तत्तत्पदवाच्यत्वं तत्तत्पदजन्यबोधविषयत्वप्रकारतानिरूपितेश्वरेच्छीयविशेष्य

त्वावत्त्वम्। तादृशप्रकारतानिरूपितविशेष्यतासम्बन्धेन तदिच्छावत्त्वं वा। तथा च तादृशस्य घटपदवाच्यत्वस्य पटेऽसत्त्वान्नातिप्रसङ्गः। गङ्गादिपदजन्यत्वस्य बोधांशे, बोधविषयत्वस्य च तीरांशे, स्वातन्त्र्येण भानम् ईश्वरेच्छायामुपेयते। इत्यञ्च विशकलितभावस्थले निरूप्यनिरूपकभावापन्नविषयताया अभावेन गङ्गादिपदजन्यत्वप्रकारतानिरूपितबोधविषयितानिरूपितविषयत्वप्रकारतानिरूपितविशेष्यतासम्बन्धेन इच्छावत्त्वस्य तीरेऽसत्त्वेन न क्षतिरिति संक्षेपः।

गवादिशब्दानां जातावेव शक्तिः। विशेषणतया जातेः प्रथममुपस्थितत्वात्। व्यक्तिलाभस्तु आक्षेपात् इति केचित्। तन्न। गामानयेत्यादौ वृद्धव्यवहारेण सर्वत्रानयनादेर्व्यक्तावेव सम्भवेन जातिविशिष्टव्यक्तावेव शक्तिकल्पनात्।

विशिष्टे शक्तिं व्यवस्थापयितुं मीमांसकमतमुपन्यस्य दूषयति गवादीति। विशेषणभूतजातिग्रहमन्तरा विशिष्टाग्रहासम्भवेन विशिष्टे शक्तिकल्पनं न सम्भवति अतो जातिग्रहस्य प्रथममुपेक्षितत्वे जातौ एव शक्तिकल्पनमुचितं लाघवात् इत्याह विशेषणतयेति। प्रथममुपस्थितत्वादिति। विशिष्टग्रहात् पूर्वमवगतत्वादित्यर्थः। कथं तर्हि व्यक्तिलाभ इत्यत आह व्यक्तीति। आक्षेपादिति। अर्थापत्तिप्रमाणादित्यर्थः। व्यक्तौ एव सम्भवेनेति। अनुपपत्तिप्रतिसन्धानशून्यतादशायाम् अपि व्यक्तिभानस्य अनुभवसिद्धत्वेन चेत्यपि बोध्यम्। विशिष्टव्यक्तौ एव इति। एवकारेण केवलजातिकल्पनव्यवच्छेदः। अतेदं बोध्यम्—जातितद्वैशिष्ट्यतदाश्रयेषु शक्तिः कल्पनीया पदार्थद्वयसम्बन्धस्य पदद्वयसमभिव्याहारलभ्यत्वेनान्यस्याशक्यस्य शाब्दबोधे भानासम्भवादिति। नव्यास्तु लक्ष्यतावच्छेदकत्वग्रहमात्रेण लक्ष्यतावच्छेदकस्य शाब्दबोधे भानम्, तथा शक्यतावच्छेदकत्वग्रहमात्रेण शक्यतावच्छेदकस्य शाब्दबोधे भानं सम्भवतीति शक्यतावच्छेदके च शक्तिर्न कल्पनीयेति वदन्ति।

शक्तिग्रहश्च वृद्धव्यवहारेण। तथा हि व्युत्पित्सुर्बालो 'गामानय' इत्युत्तमवृद्धवाक्यश्रवणानन्तरं मध्यमवृद्धस्य प्रवृत्तिमुपलभ्य गवानयनं दृष्ट्वा मध्यमवृद्धप्रवृत्तिजनकज्ञानस्यान्वयव्यतिरेकाभ्यां जन्यत्वं निश्चित्य 'अश्वमानय गां बधान' इति

वाक्यान्तरे आवापोद्वापाभ्यां गोपदस्य गोत्वविशिष्टे शक्तिः, अश्वपदस्य अश्वत्वविशिष्टे शक्तिः, इति व्युत्पद्यते।

शक्तिग्रहश्च वृद्धव्यवहारेणेति। शक्तिग्रहश्च वृद्धव्यवहारादिना भवतीत्यर्थः। आदिना व्याकरणादिपरिग्रहः। अत एव 'शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च। वाक्यस्य शेषाद् विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः।' इत्यभियुक्तोक्तिः सङ्गच्छते। व्याकरणात् प्रकृतिप्रत्ययादीनां शक्तिग्रहः। उपमानात् शक्तिग्रहस्तु अधस्ताद्दर्शितः। 'अथैकदन्तहेरम्बलम्बोदरगजाननाः' इति कोशादेकदन्तादिशब्दाः गणेशत्वविशिष्टे शक्ता इत्यर्थकाद् गणेशत्वविशिष्टे शक्तिग्रहः। तत्रैकदन्तादिशब्दानामेव पदार्थतया तेषां विभिन्नत्वे द्वन्द्वोपपत्तिः। 'कोकिलः पिकपदवाच्य' इत्याप्तवाक्यात् पिकपदस्य कोकिले शक्तिग्रहः। व्यवहारतः शक्तिग्रहमुपपादयति व्युत्पित्सुरिति। शक्तिग्रहेच्छावान् इत्यर्थः। उत्तमवृद्धेति। प्रयोजकवृद्धेत्यर्थः। मध्यमवृद्धस्येति। प्रयोज्यवृद्धस्य इत्यर्थः। गवानयनं दृष्ट्वा प्रवृत्तिमुपलभ्य चेत्यन्वयः। उपलभ्येत्यस्यानुमायेत्यर्थः 'इयं क्रिया प्रयत्नपूर्विका विलक्षणक्रियात्वात् स्वीयक्रियावत्' इत्यनुमानप्रयोगो बोध्यः। प्रवृत्तिजनकज्ञानस्य घटानयनगोचरप्रयत्नजनकघटानयनज्ञानस्य। वाक्यस्य विशिष्टेऽर्थे शक्तिर्न कल्पनीया तादृशार्थस्य समभिव्याहारलभ्यत्वात्। 'अनन्यलभ्यो हि शब्दार्थः' इति न्यायात् इत्यभिसन्धिमानाह अश्वमानयेत्यादि। आवापोद्वापाभ्यामिति। आवापः संग्रहः उद्वापः त्यागः। उत्पद्यत इति। व्युत्पत्त्याश्रयो भवतीत्यर्थः। वाक्यशेषाद् यथा यवमयश्चरुर्भवतीत्यत्र यवशब्दः आर्यव्यवहाराद्दीर्घशूकविशिष्टस्य वाचकः। म्लेच्छव्यवहारात् कङ्गोर्वाचको वेति सन्देहे 'वसन्ते सर्वशस्यानां जायते पत्रशातनम्। मोदमानाश्च तिष्ठन्ति यवाः कणिशशालिनः।' इति वाक्यशेषाद्दीर्घशूकविशिष्टे शक्तिनिर्णयः। कङ्गौ तु शक्तिभ्रमात् प्रयोगः। विवरणाद् यथा पचति पाकं करोति इति यत्नार्थककरोतिना सर्वाख्यातव्याख्यानात् आख्यातस्य यत्नत्वविशिष्टे शक्तिग्रहः। सिद्धपदसान्निध्याच्छक्तिग्रहस्तु 'विकसितपद्मे' इत्याद्यग्रिमग्रन्थ एव स्फुटीभविष्यतीत्यलं पल्लवितेन।

ननु सर्वत्र कार्यपरत्वाद्व्यवहारस्य कार्यवाक्ये एव व्युत्पत्तिः, न सिद्धे। इति चेत्। न। 'काश्यां त्रिभुवनतिलको भूपतिः' इत्यादौ सिद्धेऽपि व्यवहारात्। 'विकसितपद्मे मधूनि पिबति

मधुकर' इत्यादौ प्रसिद्धपदसमभिव्याहारात् सिद्धेऽपि मधुकरादिव्युत्पत्तिदर्शनाच्च।

व्यवहारस्य कार्य्यपरत्वादिति योजना। कार्य्यपरत्वञ्च कृतिसाध्यानयनादिरूपक्रियातात्पर्य्यकत्वम्। व्युत्पत्तिः। शक्तिग्रहः। व्यवच्छेद्यं स्फुटयति न सिद्धेति। सिद्धेऽपि व्यवहारादिति। तथा च सिद्धेऽपि शक्तिग्रहस्यावश्यकः। अन्यथा तत्रानुभवसिद्धस्य शाब्दबोधस्यापलापापत्तेरिति भावः।

लक्षणापि शब्दवृत्तिः। शक्यसम्बन्धो लक्षणा। 'गङ्गायां घोषः' इत्यत्र गङ्गापदवाच्यः प्रवाहसम्बन्धादेव तीरोपस्थितौ तीरेऽपि शक्तिर्न कल्प्येत। सैन्धवादौ लवणाश्वयोः परस्परसम्बन्धाभावात् नानाशक्तिकल्पनम्। लक्षणा त्रिविधा-जहल्लक्षणा, अजहल्लक्षणा, जहदजहल्लक्षणा, चेति। यत्र वाच्यार्थस्यान्वयाभावः तत्र जहल्लक्षणा यथा मञ्चाः क्रोशन्ति। यत्र वाच्यार्थस्याप्यन्वयः तत्र अजहदिति। यथा छत्रिणो गच्छन्ति। यत्र वाच्यैकदेशत्यागेन एकदेशान्वयः तत्र जहदजहदिति। यथा तत्त्वमसीति। गौण्यपि लक्षणैव लक्ष्यमाणगुणसम्बन्धस्वरूपा। अग्निर्माणवक इति।



तीरेऽपि शक्तिर्न कल्प्येत इति। गङ्गापदस्येतिशेषः। ननु एवं सैन्धवादिपदानां नानार्थकत्वानुपपत्तिः। एकत्र शक्तिरन्यत्र लक्षणेत्येव निर्वाहादत आह सैन्धवादाविति। आदिना हर्य्यादिपरिग्रहः। सम्बन्धाभावादिति। संयोगादिरूपसम्बन्धाभावादित्यर्थः। इदमुपलक्षणं प्रसिद्धयोरर्थयोः कुत्र शक्तिः कुत्र लक्षणेत्यत्र विनिगमकाभावेन उभयत्र शक्तिकल्पनस्यावश्यकतेति। मञ्चा इति। मञ्चपदं मञ्चस्थपुरुषे लाक्षणिकम्। वाच्यार्थस्य क्रोशनकर्त्तृत्वान्वयासम्भवादिति भावः। वाच्यस्यापीति। अपिना लक्ष्यसमुच्चयः। छत्रिण इति। एकसार्थवाहित्वेन छत्राच्छत्रिषु गमनकर्त्तृत्वान्वयतात्पर्य्यानुपपत्तिरेव लक्षणाबीजम्। न च छत्रिन्नित्यस्य मतुबर्थकेन्प्रत्ययान्ततया पदसमूहरूपत्वेन तच्छक्त्याः शक्यसम्बन्धरूपलक्षणाया अभावेन कथमिदमुदाहरणमिति वाच्यम्। प्रतिपाद्यसम्बन्ध एव लक्षणा इत्येतदभिप्रायेण उदाहरणात्। अन्यथा "काकेभ्यो दधि रक्ष्यताम्" इत्याद्युदाहर्त्तव्यम्।

काकपदस्य काकतदितरसाधारणदध्युपघातकत्वावच्छिन्नपरत्वात्। केचित्तु छत्रिपदस्यैकसार्थे लक्षणा। तद्धितार्थः सम्बन्धो। तथा चैकसार्थसम्बन्धिनो गच्छन्तीत्यन्वयबोध इत्याहुः। तत्त्वमसीति। अत्र तत्पदवाच्ये सर्वज्ञत्वादिविशिष्टे त्वंपदवाच्यस्यान्तःकरणादिविशिष्टस्याभेदानुपपत्त्या उभयत्र विशेषणांशपरित्यागः। तथा च तत्पदलक्ष्यस्य शुद्धस्य त्वंपदलक्ष्येण सहाभेदान्वयोपपत्तिरित्यभिप्रायः। इदमुदाहरणं तु जीवब्रह्मणोरैक्यं ब्रुवतां ब्रह्मवादिनां सिद्धान्ताभिप्रायेण। नैयायिकमते तस्यासम्मतत्वात्। नैयायिकरीत्या तु 'सोऽयं देवदत्तः' इत्यादौ तत्तांशस्येदानीमसम्भवात् हानम्, इदन्तांशस्य सम्भवादहानमिति जहदजहल्लक्षणामाचक्षते। परे तु 'घटो नित्यः" इत्यादौ घटत्वस्येव 'सोऽयं देवदत्तः" इत्यादौ तत्तांशस्योपलक्षणतया भाने न किं चिद्बाधकमिति किं जहदजहल्लक्षणयेति वदन्ति। गौण्या वृत्त्यन्तरत्वं निराचष्टे गौण्यपीति।

ननु 'गङ्गायां घोषः" इत्यत्र तीरे शक्यस्य प्रवाहस्येव 'अग्निर्माणवकः, इत्यादौ माणवके शक्यस्याग्नेः साक्षात्सम्बन्धो न सम्भवति, इति कथं लक्षणया निर्वाह इत्यत आह लक्ष्यमाणेति 'लक्ष्यमाणो यो गुणः शुचित्वादिः तत्सम्बन्धरूपा, इत्यर्थः। अयमभिप्रायः शक्यसम्बन्धो हि लक्षणा। स च क्वचित् साक्षात्सम्बन्धः, क्वचित्परम्परासम्बन्धः। एवञ्च शक्यस्याग्नेः स्वनिष्ठशुचित्ववत्त्वसम्बन्ध एव लक्षणेति।

**व्यञ्जनापि शक्तिलक्षणान्तर्भूता शब्दशक्तिमूला अर्थशक्तिमूला च अनुमानादिना अन्यथासिद्धा।**

**तात्पर्य्यानुपपत्तिर्लक्षणाबीजम्। तत्प्रतीतीच्छया उच्चरितत्वं तात्पर्य्यज्ञानम् च वाक्यार्थज्ञाने हेतुः। नानार्थानुरोधात्। प्रकरणादिकं तात्पर्य्यग्राहकम्।**

आलङ्कारिकाः पुनरेवमाहुः "तीरे घोष" इति प्रयोगे स्वायत्ते "गङ्गायां घोष" इत्यनन्विताभिधानम् शैत्यपावनत्वादिप्रतीत्यर्थम्। न च सा प्रतीतिर्लक्षणया अभ्युपपद्यते। केवलतीरलक्षणया एवानुपपत्तिपरिहारे शैत्यपावनत्वादिविशिष्टलक्षणायां मानाभावात्। तस्माद्व्यञ्जनावृत्तिरवश्यमङ्गीकर्त्तव्येति। तन्मतं निरस्यति व्यञ्जनापीति। शक्तिलक्षणान्तर्भूतेति। अयं भावः व्यञ्जके नानार्थकस्थले "दूरस्था भूधरा रम्याः"इत्यादौ भूधरशब्देन पर्वतानामिव राज्ञामपि शक्त्यैव प्रतीतिः सम्भवति। "गङ्गायां घोषः" इत्यादौ तु शैत्यपावनत्वादिविशिष्टतीरप्रतीतिरपि

लक्षणासामान्यादेव। तत्र लक्षणाकल्पिकायाः तात्पर्य्यानुपपत्तेरेव सद्भावात् किमतिरिक्तव्यञ्जनयेति।

ननु शब्दशक्तिमूलाया व्यञ्जनाया अन्यथासिद्धत्वेऽपि अर्थशक्तिमूलायाः तस्याः नान्यथासिद्धिः। तथा हि 'गच्छ गच्छसि चेत् कान्त! पन्थानः सन्तु ते शिवाः। ममापि जन्म तत्रैव भूयाद् यत्र गतो भवान्'। इत्यादौ 'हे प्रिय! तव गमनोत्तरं मम प्राणवियोगो भविष्यति। अतो न गन्तव्यम्' इत्याद्यर्थो व्यज्यते। न हि अत्र शक्तिलक्षणाभ्यां निर्वाहः। इत्यस्य व्यञ्जनाया आवश्यकतेत्यत आह अर्थशक्तिमूला चेति। चस्त्वर्थे। अनुमानादिनेति। अनुमानप्रकारस्तु 'इयं मदीयगमनोत्तरकालिकप्राणवियोगवती विलक्षणशब्दप्रयोक्तृत्वात्, इत्यादिरूपः। आदिना सम्भावनादिपरिग्रहः। उत्कटैकतरकोटिकसंशयः सम्भावना। औत्कट्यञ्च विषयताविशेषः। यदि पुनरानुभविकलोकानां स्वरसवाही 'शब्दादमुमर्थं प्रत्येमि इत्यनुभवः, तदा वैयञ्जनकी प्रतीतिः गीर्वाणगुरुणाप्यशक्यवारणेति व्यञ्जनासिद्धिरप्रत्यूहैवेति मन्तव्यम्।



अन्वयानुपपत्तेर्लक्षणाबीजत्वे 'यष्टीः प्रवेशय' इत्यादौ लक्षणानुपपत्तिः। तात्पर्य्यानुपपत्तेः तथा तस्यास्तत्रापि सत्त्वेन यष्टिपदस्य यष्टिधरे लक्षणा सम्भवतीत्याशयेनाह तात्पर्य्यानुपपत्तिरिति। तत्प्रतीतीति। तीरादिरूपत्वेन प्रतीतिरित्यर्थः। नानार्थ इति। "सैन्धवमानय" इत्यादिनानार्थस्थले सैन्धवपदस्य अश्वे लवणे च शक्तेः तुल्यतया शाब्दबोधे तात्पर्य्यग्रहस्य कारणत्वमन्तरा न नियतकाले तत्तद्बोधोपपत्तिरिति तत्र तत्कारणत्वस्यावश्यकत्वे तदनुरोधेन सर्वत्र तदावश्यकतेति भावः। न च मौनिश्लोकादौ शब्दबोधानुपपत्तिः। तत्र निरुक्ततात्पर्य्यस्य असत्त्वादिति वाच्यम्। तात्पर्य्यस्य तत्प्रतीतीच्छारूपत्वपर्य्यवसानेन तत्र तादृशतात्पर्य्यसत्त्वेनादोषात्। न च तथापि तत्प्रतीतीच्छारहितशुकाद्युच्चरितवाक्यादपि शाब्दबोधस्यानुभविकतया तत्रानुपपत्तेः परिहारासम्भव इति शङ्क्यम्। तत्रेश्वरीयेच्छामादायैवानुपपत्तेः परिहारसम्भवात् इत्यलमनल्पजल्पनेन। प्रकरणादिकमिति। आदिना 'सशङ्खचक्रो हरिः पूज्य, इत्यादौ हरिशब्दस्य भगवति तात्पर्य्यनिर्णायकस्य "सशङ्खचक्रः" इति विशेषणादेः परिग्रहः। कथं प्रकरणादेः तात्पर्य्यग्राहकत्वमिति चेत्। इत्थम् 'इदं सैन्धवपदं लवणबोधेच्छयोच्चरितं भोजनप्रकरणे उक्तत्वात्, इत्यादिरीत्या गृहाण।

द्वारमित्यादौ पिधेहीतिशब्दाध्याहारः। ननु अर्थज्ञाना-

र्थत्वात् शब्दस्यार्थमविज्ञाय शब्दाध्याहारासम्भवादर्थाध्याहार एव युक्त इति चेत्। न। पदविशेषजन्यपदार्थोपस्थितेः शाब्दज्ञाने हेतुत्वात्। अन्यथा 'घटः कर्मत्वमानयनं कृतिः'। इत्यत्रापि शाब्दज्ञानप्रसङ्गात्।

प्रभाकरमतं निराकरिष्यमाणः स्वसिद्धान्तं दर्शयति द्वारमिति। अर्थज्ञानार्थत्वाच्छब्दस्येति। शब्दज्ञानस्य अर्थज्ञानफलकत्वादित्यर्थः। एतावता प्रथमत एवार्थानुसन्धाने लाघवमिति हृदयम्। किञ्च "अर्थबुद्ध्या वाक्यरचना" इति न्यायेनार्थज्ञानमन्तरा आकाङ्क्षितशब्दानुसन्धानरूपशब्दाध्याहारस्यैवासम्भवेन प्रथमतः अर्थाध्याहारस्यैवावश्यकतेत्याह अर्थमपीति। यथाकथञ्चिदुपस्थितपदार्थानां शब्दबोधानुदयेन पदजन्यत्वस्योपस्थितिविशेषणताया आवश्यकतया तादृशोपस्थितिसम्पत्तये शब्दाध्याहार एव अनायत्या अनुसर्त्तव्य इत्याह पदविशेषेति। विशेषपदस्यापि प्रयोजनं दर्शयितुम् 'घटः कर्मत्वम्' इत्याद्यनुधावनम्। तत्र कर्मत्वादिपदजन्यकर्मत्वाद्युपस्थितेः सत्त्वेऽपि घटपदोत्तरामादिपदजन्यकर्मत्वाद्युपस्थितेरसत्त्वेन न सिद्धान्तिमते शाब्दबोधप्रसङ्ग इति भावः। पदविशेषजन्येत्यत्र वृत्त्या पदविशेषजन्येत्यपि बोध्यम्। तेन "घटमानय" इत्यादौ घटादिपदादाकाशादेरुपस्थितावपि न शाब्दबोध इति दिक्।

पङ्कजादिपदेषु योगरूढिः। अवयवशक्तिर्योगः समुदायशक्तीरूढिः। नियतपद्मत्वज्ञानार्थं समुदायशक्तिः। अन्यथा कुमुदेऽपि प्रयोगप्रसङ्गः।

यद्यपि पदं तावत् चतुर्विधम् यौगिकं, रूढं, योगरूढं, यौगिकरूढं चेति। योगोऽवयवशक्तिः तन्मात्रेणार्थप्रतिपादकम् आद्यम्। यथा पाचकादिपदम्। रूढिः समुदायशक्तिः। तन्मात्रेणार्थप्रतिपादकं द्वितीयम्। यथा गवादिपदम्। योगरूढिभ्यां परस्परसहकारेणार्थप्रतिपादकं तृतीयम्। यथा पङ्कजादिपदम्। यौगिकञ्च तद्रूढं चेति व्युत्पत्त्या योगरूढ्या च परस्परासहकारेणार्थप्रतिपादकं चतुर्थम्। यथा उद्भित्पद योगेन तरुगुल्मादेः रूढ्या तु यागविशेषस्य वाचकम्। तथापि योगरूढं प्रदर्श्य तत्र योगरूढ्योः स्वरूपप्रदर्शनेन तद्रीत्या अन्यत्रापि बोद्धुं शक्यमित्यभिप्रायेण पङ्कजादिपदे योगरूढिं प्रदर्शयति पङ्कजादीति। योगरूढिरिति योगसहिता रूढिरित्यर्थः।

ननु पङ्कजादिशब्देष्वपि योग एवास्तु। तावतैव निर्वाहात् इत्याशङ्का पङ्कजशब्दस्य पद्मत्वावच्छिन्ने वृत्तिमन्तरा नियमेन पद्मत्वावच्छिन्नभानम् अनुभवसिद्धं न निर्वहतीति पद्मत्वावच्छिन्नरूढ़िरावश्यकीत्याह नियतेति। नियतपद्मत्वावच्छिन्नभानानुभवे विप्रतिपन्नं प्रत्याह अन्यथेति। नियतपद्मत्वावच्छिन्नभानोपयोगिसमुदायशक्त्यनङ्गीकार इत्यर्थः। प्रयोगेति। पङ्कजपदप्रयोगे इत्यर्थः।

## 'इतरान्विते शक्तिः' इति प्राभाकराः।

यद्यपि 'कार्य्यान्विते शक्तिः' इति प्रभाकरमतम्। तथापि सिद्धार्थपरवाक्ये व्युत्पत्तेर्व्यवस्थापितत्वेन तत्साधारण्याय तन्मतं परिष्कृत्य दर्शयति इतरान्वित इति। अन्विते शक्तिः इति तु निष्कर्षः। अयमभिप्रायः कथञ्चित् उपस्थितपदार्थानां शाब्दबोधवारणाय तत्तद्विषयकशाब्दबोधं प्रति वृत्तिज्ञानजन्यतदुपस्थितत्वेन हेतुतायाः कल्पनीयतया अन्वयांशेऽपि शक्तिरपेक्षिता। अन्यथा तादृशसामान्यकार्य्यकारणभावभङ्गापत्तेः।

न च संसर्गविषयताभिन्नतत्तद्विषयकशब्दबोधं प्रति वृत्तिज्ञानाधीनतत्तदुपस्थितत्वेन हेतुत्वमास्ताम्। तथाच अन्वयांशेऽपि शक्त्यनङ्गीकारेऽपि न क्षतिरिति वाच्यम्। तथा सति कार्य्यतावच्छेदकगौरवापत्तेः। एवं चान्वितो घटपदवाच्यः' इत्याकारकशक्तिज्ञानमेव शाब्दबोधप्रयोजकमिति। केचित्तु इतरान्विते शक्तिरित्यस्य कार्य्यान्विते शक्तिरित्यर्थमाहुः।

## 'अन्वयस्य वाक्यार्थतया भानसम्भवादन्वयांशेऽपि शक्तिर्न कल्पनीया' इति गौतमीयाः।

सयुक्तिकं नैयायिकमतं दर्शयति अन्वयस्येति। पदार्थसंसर्गस्य पदसमभिहारबलादेव शाब्दबोधे भानसम्भवात् तादृशसंसर्गांशेऽपि शक्तिर्न कल्पनीया इति समुदितार्थनिष्कर्षः। अयमाशयः तद्विषयकशाब्दबुद्धिं प्रति वृत्तिज्ञानाधीनतदुपस्थितित्वेनानुगतकार्य्यकारणभावो न सम्भवति। शक्तिलक्षणोभयसाधारणस्य वृत्तित्वस्य दुर्वचत्वात्। अपि तु तच्छक्तपदज्ञानजन्यतदुपस्थितित्वेनैका कारणता। तल्लाक्षणिकपदज्ञानजन्यतदुपस्थितित्वेन च अपरा कारणता स्वीकर्त्तव्या। परस्परतत्तदुपस्थितिजन्यशाब्दबोधे व्यभिचारवारणाय च तत्तत्कारणाव्यवहितोत्तरत्वं तत्तत्कारणजन्यतावच्छेदककोटौ निवेशनीयम्। एवञ्च वृत्त्यनुपस्थापितस्यापि पदार्थद्वयसंसर्गस्य शाब्दबोधोपगमे व्यभिचाराप्रसक्त्या दर्शितद्विविधकार्य्यकारणभावस्य निष्प्रत्यूहतेति किमन्वयांशे शक्तिकल्पनेन।

आकाङ्क्षा योग्यता सन्निधिश्च वाक्यार्थज्ञाने हेतुः। पदस्य पदान्तरव्यतिरेकप्रयुक्तान्वयाननुभावकत्वमाकाङ्क्षा। अर्थाबाधो योग्यता। पदानामविलम्बेनोच्चारणं सन्निधिः। तथा च आकाङ्क्षादिरहितं वाक्यमप्रमाणम्। यथा 'गौरश्वः पुरुषो हस्ती' इति न प्रमाणम्। आकाङ्क्षाविरहात्। 'अग्निना सिञ्चेत्' इति न प्रमाणम्, योग्यताविरहात्। प्रहरे प्रहरे असहोच्चारितानि 'गाम्, आनय' इत्यादिपदानि न प्रमाणम्। सान्निध्याभावात्।



आकाङ्क्षेति। आकाङ्क्षादिज्ञानमित्यर्थः। अन्यथा आकाङ्क्षादिभ्रमाच्छाब्दो भ्रमो न स्यात्। आकाङ्क्षां लक्षयति पदस्येति। योग्यतामाह अर्थेति। सन्निधिलक्षणमाह पदानामिति। अविलम्बेन पदार्थोपस्थितिः सन्निधिः। उच्चारणं तु तदुपयोगितया उक्तम्। गौः अश्व इति। घटः कर्मत्वमित्यप्यनाकाङ्क्षोदाहरणं द्रष्टव्यम्।

आकाङ्क्षादिरहितपदसमुदायात् शाब्दबोधवारणाय आकाङ्क्षादेः शाब्दबोधहेतुत्वमभिहितं मूलकृता। तच्च नवीनमते न निर्वहतीति तज्ज्ञानस्य हेतुतामाह—आकाङ्क्षादिज्ञानमिति। आदिना योग्यतापरिग्रहः। अन्यथा आकाङ्क्षादेः शाब्दधीहेतुत्वे। मूले—पदस्येति। यत्पदस्य यत्पदाभावप्रयुक्तमन्वयबोधाजनकत्वं तत्पदसमभिव्याहृततत्पदत्वमाकाङ्क्षेत्यर्थः। प्रयुक्तत्वञ्च 'कारणाभावात् कार्याभाव' इति प्रतीतिसाक्षिकः स्वरूपसम्बन्धविशेषः। अजनकत्वान्तं परिचायकम् एकपदार्थेऽपरपदार्थत्वं योग्यतेति मते संशयनिश्चयसाधारणतज्ज्ञानत्वाव-

च्छिन्नं शाब्दधीहेतुः। बाधनिश्चयाभावो योग्यतेति नवीनमते तु स्वरूपसत्येव योग्यता तद्धेतुरिति दिक्।

**वाक्यं द्विविधम् वैदिकं, लौकिकञ्च। वैदिकमीश्वरोक्तत्वात् सर्वमेव प्रमाणम्। लौकिकं तु आप्तोक्तं प्रमाणम्। अन्यदप्रमाणम्। वाक्यार्थज्ञानं शब्दज्ञानम्। तत्करणम् शब्दः। इति शब्दप्रमाणम्।**

वाक्यं विभजते वाक्यमिति। वैदिके विशेषमाह वैदिकमीश्वरोक्तत्वादिति।

ननु वेदस्यानादित्वात् कथमीश्वरोक्तत्वमिति चेत्। 'वेदः पौरुषेयः वाक्यसमूहत्वात् भारतादिवत्' इत्यनुमानेन पौरुषेयत्वसिद्धेः। न च स्मर्य्यमाणकर्तृत्वमुपाधिः। गौतमादिभिः शिष्यपरम्परया वेदेऽपि सकर्तृत्वस्मरणेन साधनव्यापकत्वात्। 'तस्मात् तपस्तेऽपानात् त्रयो वेदा अजायन्त' इति श्रुतेश्च।

ननु वर्णा नित्याः। 'स एवायं गकारः' इति प्रत्यभिज्ञाबलात्। तथा च कथं वेदस्यानित्यत्वमिति चेत्। न। 'उत्पन्नो गकारो नष्टो गकारः' इत्यादिप्रतीत्या वर्णानामनित्यत्वात् 'सोऽयं गकारः' इति प्रत्यभिज्ञायाः 'सेयं दीपज्वाला' इतिवत् जात्यावलम्बनत्वात्। वर्णानां नित्यत्वेऽप्यानुपूर्वीविशिष्टवाक्यस्याप्यनित्यत्वात्। तस्मात् ईश्वरोक्तो वेदः। मन्वादिस्मृतीनाम् आचाराणां च वेदमूलकतया प्रामाण्यम्। स्मृतिमूलवाक्यानामिदानीमनध्ययनात् तन्मूलभूता काचित् शाखोच्छिन्नेति कल्प्यते।

ननु पाठ्यमानवेदवाक्योत्सादस्य कल्पयितुम् अशक्यतया

**विप्रकीर्णवादस्यायुक्तत्वात् नित्यानुमेयो वेदो मूलमिति चेत् । न । तथापि वर्णानुपूर्वीज्ञानाभावेन बोधकत्वासम्भवात् ।**

मीमांसकः शङ्कते नन्विति । वेदस्य पुरुषोक्तत्वम् अनुमानेन व्यवस्थापयति वेद इति । ननु 'अष्टादशपुराणानां कर्ता सत्यवतीसुतः' इति प्रमाणबलेन भारतादौ कर्ता तु उपलभ्यते न तथा वेदे । तथा च स्मर्यमाणकर्तृकत्वस्य भारतादौ साध्यव्यापकत्वात् पक्षे साधनाव्यापकत्वात् उपाधित्वेन कथमनुमानम् साध्यसाधकं भवेत् इत्याशङ्कते न चेति । गौतमादिभिः शिष्यपरम्परया वेदकर्तुरुपदेशे विवदन्तं प्रत्याह तस्मादिति । स एवायं गकार इति । अत्र एतत्कालिकगकारे पूर्वकालिकगकारभेदो भासते । स च वर्णानामनित्यत्वे न सम्भवतीति भावः । अनित्यत्वादिति । तर्हि प्रत्यभिज्ञाविरोध इत्यत आह सोऽयमिति । उत्पत्तिविनाशप्रत्यययोः अन्यार्थकल्पनमपेक्ष्यैतत्प्रत्ययस्य तथात्वकल्पने लाघवमिति हृदयम् । 'अग्निमीळे' इत्यादौ आनुपूर्वी अकारोत्तरग्नत्वादिरूपा । तच्चोत्तरत्वमव्यवहितोत्तरक्षणवृत्तित्वरूपं वाच्यम् । इत्थञ्च वर्णानां नित्यत्वाङ्गीकारेऽपि अनित्यक्षणघटितताया आनुपूर्व्या अनित्यत्वात् तद्विशिष्टवाक्यसमुदायात्मकवेदस्य त्वदभिमतनित्यत्वं न सिध्यतीति वर्णानामनित्यत्वमेवोचितमित्याह वर्णानामिति । यद्यपि स्मृत्यादीनां आप्तोक्तत्वादेव प्रमाणत्वं सिध्यति, तत्कर्तृमन्वादीनामाप्तत्वात् । तथापि तेषामसत्त्वे विप्रतिपन्नं प्रत्याह मन्वादीति । आचाराणामिति । आचारप्रतिपादकविशिष्टवाक्यानामित्यर्थः । एतेन प्रमाणविभागव्याघातशङ्का निरस्ता । वेदार्थं ज्ञात्वैव मन्वादिभिः तदर्थकस्मृत्यादीनि विचारितानि । अतस्तेषां प्रामाण्यमिति मनसिकृत्याह वेदमूलकतयेति ।

ननु तर्हि स वेदः कुतो नोपलभ्यते इत्यत आह स्मृतिमूलेति । तन्मूलभूतेत्यादि । स्मृत्यादिमूलभूता काचित् शाखा पाठतः परिभ्रष्टेति अनुमीयत इत्यर्थः । वाक्योत्सादस्य वाक्योच्छेदस्य ।

ननु समानानुपूर्वीकवेदपाठस्य सम्प्रदायसिद्धत्वात् तादृशवेदे कतिपयवाक्योच्छेदस्य कल्पयितुमशक्यत्वेऽपि पठ्यमानवेदे विशकलिततया विद्यमानवाक्यानां स्मृतिमूलत्वमस्तीत्यत आह विप्रकीर्णेति । अयुक्तत्वादिति । स्मृत्यादिसमानार्थकवाक्यानां पठ्यमानवेदेऽनुपलम्भादिति भावः । नित्यानुमेय इति । नित्योऽनुमेयरूप इत्यर्थः । वर्णानुपूर्वीज्ञानाभावेनेति । तादृशज्ञानस्यापि शाब्दबोधहेतुत्वात् । अन्यथा नदीदीनादिशब्दैरर्थविशेषबोधानापत्तेरिति भावः ।

ननु 'एतानि पदानि स्मारितार्थसंसर्गवन्ति आकाङ्क्षादिमत्पदकदम्बकत्वात्, 'गामानय दण्डेनेति मद्वाक्यवत्' इत्यनुमानादेव संसर्गज्ञानसम्भवात् शब्दो न प्रमाणान्तरमिति चेत्। न। अनुमित्यपेक्षया शाब्दज्ञानस्य विलक्षणस्य 'शब्दात्प्रत्येमि' इत्यनुव्यवसायसाक्षिकस्य सर्वसम्मतत्वात्।

शब्दस्य प्रमाणत्वमनङ्गीकुर्वतां वैशेषिकाणां मतं दूषयितुमुपन्यस्यति नन्वेतानीत्यादिना। एतानि पदानि घटमानयेत्यादीनि। स्मारितार्थसंसर्गवन्ति इति। स्मारितार्थसंसर्गज्ञानपूर्वकाणीत्यर्थ:। संसर्गे तात्पर्यविषयत्वं निवेशनीयम्। तेन संसर्गान्तरमादाय नार्थान्तरता। आकाङ्क्षादीत्यादिना योग्यतासत्त्यो: परिग्रह:। आकाङ्क्षादिरहिते पदकदम्बे व्यभिचारवारणाय आकाङ्क्षादीति। सर्वसम्मतत्वादिति। तथा च कार्यवैलक्षण्यानुरोधेन शब्द: प्रमाणान्तरमिति भाव:।

नन्वर्थापत्तिरपि प्रमाणान्तरमस्ति 'पीनो देवदत्तो दिवा न भुङ्क्ते' इति दृष्टे श्रुते वा पीनत्वान्यथानुपपत्त्या रात्रिभोजनमर्थापत्त्या कल्प्यत इति चेत्। न। देवदत्तो रात्रौ भुङ्क्ते दिवाऽभुञ्जानत्वे सति पीनत्वात् इत्यनुमानेनैव रात्रिभोजनस्य सिद्धत्वात्।



मीमांसक: शङ्कते नन्विति। दिवा न भुङ्क्ते इत्यर्थे दृष्टे प्रत्यक्षतो ज्ञाते श्रुते शब्दादवगते। एतेन दृष्टार्थापत्ति: श्रुतार्थापत्तिश्चेत्यर्थापत्तेर्द्वैविध्यं सूचितम्। पीनत्वान्यथानुपपत्त्येति। पीनत्वस्य रात्रिभोजनं विना अनुपपत्त्येत्यर्थ:। अत्रेदम् अवधेयम् यद्विना यदनुपपन्नं तत्तदुपपादकमिति रात्रिभोजनम् उपपादकम्, पीनत्वमुपपाद्यम्, उपपादकज्ञानं फलम् उपपाद्यज्ञानं करणम्। फलकरणयोरर्थापत्तिशब्दो वर्त्तते। फले 'अर्थस्य आपत्ति: कल्पना' इति व्युत्पत्त्या। करणे तु 'अर्थस्यापत्ति: कल्पना यस्मात्' इति व्युत्पत्त्येति। व्यतिरेक्यनुमानेनैव गतार्थत्वात् अर्थापत्ते: प्रमाणान्तरत्वमनुचितमिति समाधत्ते देवदत्त इति। दिवामात्रभोजने पीने व्यभिचारवारणाय सत्यन्तम् अहोरात्रभोजिनि अपीने व्यभिचारवारणाय विशेष्यं योगरूढ्यन्यपीनत्वपरम्। तेन भोजनशून्ये योगिनि पीने न व्यभिचार:।

शते पञ्चाशदिति सम्भवोऽप्यनुमानमेव। 'इह वटे यक्षस्तिष्ठति' इत्यैतिह्यमपि अज्ञातमूलवक्तृकः शब्द एव।

सम्भवैतिह्ययोरतिरिक्तप्रमाणत्वं वदतां पौराणिकानां मतं दूषयति शते पञ्चाशदित्यादिना। अनुमानमेव न तु प्रमाणान्तरमित्यर्थः। शतवानित्युक्ते पञ्चाशद्वानिति ज्ञानं सम्भवति तस्यानुमानेनैव निर्वाहात्। शतस्य पञ्चशद्व्याप्यत्वादिति भावः।

अज्ञातमूलेति। विशिष्यानिश्चितप्रथमवक्तृकः शब्दः, न तु प्रमाणान्तरमित्यर्थः। तादृशशब्दस्य यथार्थत्वे शब्दप्रमाणमध्येऽन्तर्भावः। अन्यथा तु अप्रमाणमेवेति हृदयम्।

चेष्टापि शब्दानुमानद्वारा व्यवहारहेतुरिति न मानान्तरम्। तस्मात् प्रत्यक्षानुमानोपमानशब्दाश्चत्वार्य्येव प्रमाणानि।

'नन्वनया चेष्टया अयमर्थो बोद्धव्य इति सङ्केतितचेष्टया विजातीयप्रमाजननात् चेष्टापि प्रमाणान्तरम्' इति वदन्तं निरस्यति चेष्टापीति। शब्दानुमानद्वारेति। शब्दद्वारा अनुमानद्वारा वा न तु स्वातन्त्र्येणेत्यर्थः। चेष्टयाकलितस्य शब्दस्य प्रमापकत्वेऽपि गौरवादनुमानानुसरणम्। व्यवहारेति। प्रमात्मकज्ञानेत्यर्थः। उपसंहरति तस्मादिति।

इति तर्कदीपिकाप्रकाशे भगवदर्पिते शब्दपरिच्छेदः।

ज्ञानानां तद्वति तत्प्रकारकत्वं स्वतो ग्राह्यं, परतो वेति विचार्य्यते। तत्र विप्रतिपत्तिः। ज्ञानप्रामाण्यं तदप्रामाण्याग्राहकयावज्ज्ञानग्राहकसामग्रीग्राह्यम्, न वा। अत्र विधिकोटिः स्वतस्त्वम् निषेधकोटिः परतस्त्वम्।

प्रमाणप्रसङ्गात् प्रमाणस्य परतो ग्राह्यतां व्यवस्थापयिष्यन् आह ज्ञानानामिति। षष्ठ्यर्थं आधेयत्वम्, तस्य चान्वयः तद्वति तत्प्रकारकत्वे। तच्च तद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्वम्। तच्छब्दार्थो घटत्वादिरूपः। स्वतो ग्राह्यमिति। ज्ञानग्राहकसामग्रीजन्यग्रहविषय इत्यर्थः। परत इति। 'ग्राह्यम्' इत्यनुषज्यते। अनुमानादिजन्यग्रहविषय इति तदर्थः। तत्र विचारे। प्रयोजकत्वं सप्तम्यर्थः। विप्रतिपत्त्यवेति। कथं तस्य विचारप्रयोजकत्वमिति चेत्। अत्र

घटन्ति। विरुद्धार्थप्रतिपादकवाक्यद्वयं हि विप्रतिपत्तिः। तथा अप्रामाण्यशङ्का-कलिततत्तद्वाक्यार्थबोधद्वारा मध्यस्थस्य संशयो जन्यते इत्येकतरकोटिनिश्चयाय न्यायप्रयोगादिरूपो विचारः। एवञ्च विचारोपयोगिसंशयजनकत्वा विप्रतिपत्ते र्वि-चारोपयोगित्वमक्षतमिति। ज्ञानप्रामाण्यमिति। पक्षनिर्देशः। अत्र 'तद्वति तत्प्रकारकज्ञानत्वरूपमेव प्रामाण्यं पक्षः'।

ननु 'प्रमितिकरणत्वरूपम्' इति तात्पर्यग्राहकं ज्ञानपदम्। वस्तुतस्तु तद्वति तत्प्रकारकज्ञानस्य घटत्वपटत्वादिरूपार्थभेदेन भिन्नतया कस्यापि प्रामाण्यस्य यावज्ज्ञानग्राहकसामग्रीग्राह्यत्वं न सम्भवति। अतः यद्धर्मावच्छिन्नघटितं प्रामाण्यं यदा पक्षो ग्राह्यः। तदा तद्धर्मप्रकारकज्ञानग्राहकयावद्ग्राह्यत्वमेव साधनीयम्। न तु सामान्यतो ज्ञानग्राहकयावद्ग्राह्यत्वमिति तात्पर्यग्राहकं ज्ञानपदम्। तदप्रामाण्येति। तदप्रामाण्याग्राहिका यावती ज्ञानग्राहिका सामग्री तज्जन्य-ग्रहविषयो न वा इत्यर्थः। एतादृशो ग्रहः गुरुमते व्यवसायः। मुरारिमिश्रमते अनुव्यवसायः। भट्टमते च ज्ञाततालिङ्गकानुमितिः। अत्र गुरुमते सर्वस्मिन्नेव ज्ञाने मितिमातृमेयैतत्त्रयं भासते। तन्मते 'घटत्वेन घटमहं जानामि' इत्या-कारकस्यैव व्यवसायस्योत्पत्तेः। एवञ्च व्यवसायस्य स्वप्रकाशात्मकतया स्वेनैव स्वगतप्रामाण्यस्य ग्रहणाद्भवति प्रामाण्यस्य स्वतोग्राह्यत्वम्। विशिष्टबुद्धौ विशे-षणज्ञानस्य कारणतायाः तैरनङ्गीकारादनुपस्थितस्यापि प्रामाण्यस्य भानसम्भवात्। मिश्रमते 'अयं घटः' इत्याकारकज्ञानानन्तरं 'घटत्वेन घटमहं जानामि' इति ज्ञानविषयकलौकिकमानसं समुत्पद्यते, तेन प्रामाण्यस्य ग्रहणम्। भट्टमते ज्ञानस्य अतीन्द्रियतया ज्ञातता लिङ्गकानुमितेरेव प्राथमिकज्ञानग्रहरूपतया प्रामाण्यं गृह्यते। अनुमानप्रयोगस्तु 'घटो घटत्ववद्विशेष्यकघटत्वप्रकारकज्ञानविषयः, घटत्वप्रकारकज्ञाततावत्त्वात्, यन्नैवं तन्नैवम्' इति। ज्ञातता च सविषयको ज्ञान-जन्यः अतिरिक्तः पदार्थ इति मतविवेकः।



अनुमानग्राह्यत्वेन सिद्धसाधनवारणाय यावदिति। 'इदं ज्ञानमप्रमा' इति ज्ञानेन प्रामाण्याग्रहाद्बाधवारणाय अप्रा-माण्याग्राहकेति। 'इदं ज्ञानमप्रमा' इति अनुव्यवसायनिष्ठ-प्रामाण्यग्राहकस्य अप्रामाण्याग्राहकत्वाभावात् स्वतस्त्वं न स्यादतः तदिति। तस्मिन् प्रामाण्याश्रये अप्रामाण्याग्राहक

**इत्यर्थः। उदाहृतस्थले व्यवसाये अप्रामाण्याग्राहकस्याप्यनुव्यवसाये तद्ग्राहकत्वात् स्वतस्त्वसिद्धिः।**

यावत्त्वविशेषणे सत्येव अग्राहकान्तं सार्थकमित्यभिप्रेत्य प्रथमतः तस्यैव प्रयोजनं दर्शयति अनुमानेति। प्रामाण्यस्येत्यादिः।' सिद्धसाधनेति। नैयायिकमतेऽपि 'इदं ज्ञानं प्रमा, समर्थप्रवृत्तिजनकत्वात्' इत्यनुमानेन 'इदं ज्ञानं प्रमा' इत्याप्तवाक्येन च ग्राह्यत्वादिति भावः। नैयायिकैर्निषेधे साध्ये बाधवारणाय इत्यपि बोध्यम्। यावदितीति। ननु सामग्र्या यावत्त्वविशेषणमयुक्तम्, यावत्सामग्रीजन्यग्रहाप्रसिद्धेः। न हि सर्वाभिर्ज्ञानसामग्रीभिः एकं ज्ञानं जन्यते। न च यावतीः सामग्रीः विशिष्योपादाय तत्तज्जन्यग्रहविषयत्वं साध्यते इति वाच्यम्। अनुव्यवसायादिसामग्रीणां तादृप्येण प्रवेशे मतत्रयसाधारण्यानिर्वाहादिति चेत्। न। यतो यावदिति फलतो ग्रहविशेषणम्। तथा च ज्ञानग्राहकसामग्रीजन्ययावद्ग्रहविषयत्वमिति फलितम्। तत्तद्धर्मप्रकारकज्ञानग्राहकसामग्रीजन्यग्रहत्वव्यापकविषयिताप्रतियोगित्वमिति निष्कर्ष इति संक्षेपः। प्रामाण्याग्रहादिति। व्यवसायनिष्ठेत्यादिः। प्रामाण्याविषयीकरणादित्यर्थः। अप्रामाण्याग्राहकेतीति। तथा च तादृशज्ञानसामग्र्याः साध्यकोट्यनिविष्टत्वात् तया प्रामाण्यस्याग्रहणेऽपि न बाध इति भावः। अनुव्यवसायनिष्ठेत्यादि। तादृशानुव्यवसायनिष्ठं अप्रामाण्यवद्विशेष्यकत्वविशिष्टाप्रामाण्यप्रकारकत्वरूपतद्ग्राहकस्येत्यर्थः। सामान्ये नपुंसकनिर्देशः। स्वतस्त्वं न स्यादिति। यदा निरुक्तप्रामाण्यस्य पक्षता, तदा अप्रामाण्याग्राहिका अप्रामाण्यप्रकारकज्ञानजनकसामग्र्या एव साध्यकोटौ निवेशनीयतया तादृशसामग्र्या अप्रसिद्धत्वात् तस्य स्वतोग्राह्यत्वं न सिध्येदित्यर्थः। सप्तमीतत्पुरुषमभिप्रेत्याह तस्मिन्निति। एतस्यैव विवरणं ग्राह्यम् प्रामाण्याश्रय इति। 'यादृशं प्रामाण्यं प्रकृतानुमितौ उद्देश्यं, तादृशप्रामाण्याश्रयविशेष्यकाप्रामाण्यप्रकारकज्ञानाजनक' इति अग्राहकान्तार्थः। 'इदं ज्ञानमप्रमा' इत्यनुव्यवसायनिष्ठप्रामाण्यग्राहकसामग्र्याः व्यवसायविशेष्यकाप्रामाण्यग्रहजनकत्वे अनुव्यवसायविशेष्यकाप्रामाण्यग्रहाजनकत्वात् ज्ञानग्राहकत्वाच्च अप्रामाण्यवद्विशेष्यकत्वादिघटितप्रामाण्यस्य स्वतोग्राह्यत्वसिद्धिरित्याह उदाहृतस्थले इति। "इदं ज्ञानमप्रमा" इत्यत्रेत्यर्थः। अधिकमस्मदीयाभिनवगणिदीधितिव्याख्यायामनुसन्धेयम्।

ननु स्वत एव प्रामाण्यं गृह्यते, 'घटमहं जानामि' इत्यनुव्यवसायेन घटघटत्वयोरिव तत्सम्बन्धस्यापि विषयीकरणात् व्यवसायरूपप्रत्यासत्तेस्तुल्यत्वात्। पुरोवर्त्तिनि प्रकारसम्बन्धस्यैव प्रमात्वपदार्थत्वात् इति चेत्। न। स्वतः प्रामाण्यग्रहे 'जलज्ञानं प्रमा न वा' इत्यनभ्यासदशायां प्रमात्वसंशयो न स्यात्। अनुव्यवसायेन प्रामाण्यस्य निश्चितत्वात्। तस्मात् स्वतोग्राह्यत्वाभावात् परतो ग्राह्यत्वम्। तथाहि प्रथमं जलज्ञानान्तरं प्रवृत्तौ सत्यां जललाभे सति 'पूर्वोत्पन्नं ज्ञानं प्रमा' समर्थप्रवृत्तिजनकत्वात् यन्नैवं तन्नैवं यथा अप्रमा' इति व्यतिरेकिणा प्रमात्वं निश्चीयते। द्वितीयादिज्ञानेषु पूर्वज्ञानदृष्टान्तेन तत्सजातीयलिङ्गेनान्वयव्यतिरेकिणापि गृह्यते।

इत्थं विप्रतिपत्तिं प्रदर्श्य मीमांसकमतमुपन्यस्यति नन्विति। स्वत एवेत्यादि। घटत्वादिघटितप्रामाण्यनिरुक्तसामग्रीत एव गृह्यत इत्यर्थः। अप्यर्थकेनैवकारेण अनुमानादिपरिग्रहः। अनुव्यवसायेनेति। इदञ्च मिश्रमताभिप्रायेण। मतत्रयसाधारण्येन तु प्राथमिकज्ञानग्रहणेति ध्येयम्। तत्सम्बन्धस्यापीति। घटघटत्वयोर्यः सम्बन्धः तस्यापीत्यर्थः। ननु अनुव्यवसाये कथं सम्बन्धस्य भानमित्याशङ्क्य यथा घटघटत्वयोर्व्यवसायरूपप्रत्यासत्त्या भानं, तथा तत्सम्बन्धस्यापि व्यवसायरूपप्रत्यासत्तेरविशेषादित्याह व्यवसायेति। ननु तावता कथं प्रामाण्यस्य भानमत आह पुरोवर्त्तिनि प्रकारसम्बन्धस्यैवेति। पुरोवर्त्तिनि यः प्रकारसम्बन्धः तद्घटितस्यैवेत्यर्थः। अयमाशयः नैयायिका अपि अनुव्यवसाये विशेष्यत्वप्रकारत्वयोर्भानमङ्गीकुर्वन्ति पुरोवर्त्तिनि घटत्वेन "जानामि' इत्याकारकस्यैव अनुव्यवसायस्य तैरङ्गीकारात्। परन्तु पुरोवर्त्तिनि घटादौ घटत्वादिरूपप्रकारसम्बन्धभानं नाङ्गीकुर्वन्ति। अतः तत्र प्रकारसम्बन्धभानस्य व्यवस्थापने किमपि नाविशिष्टमिति प्रामाण्यस्य भानं सिध्यति अनुपस्थितयोरपि विशेष्यत्वप्रकारत्वयोर्भानस्य सर्वसम्मतत्वादिति। जलज्ञानमित्यादि। "जलज्ञानं प्रमा, न वा" इत्याकारकः अनभ्यासदशायां प्राथमिकजलज्ञानग्रहोत्तरदशायाम् अनुभावसिद्धः प्रमात्वसंशयो न स्यात् इत्यर्थः। निश्चितत्वादिति। तद्दशानिश्चयस्य तद्भाववत्ताज्ञानं प्रति

प्रतिबन्धकत्वादिति। अत्र ज्ञातो घट इति प्रतीतेर्ज्ञानविषयताविषयकत्वकल्पनेनैव निर्वाहे अतिरिक्तज्ञानता न कल्पनीया गौरवात् मानाभावाच्चेति तन्निरसनप्रकारो बोध्यः।

तस्मादिति। अनभ्यासदशायां संशयानुभवादित्यर्थः। एकस्य स्वतोग्राह्यत्वाभावेऽन्वयः। परतो ग्राह्यत्वमिति। प्रामाण्यस्यानुमानादिना एव ग्राह्यत्वमित्यर्थः। प्रवृत्तौ सत्यामिति। एतेन मीमांसकैरभ्युपगतायां प्रामाण्यनिश्चयस्य प्रवृत्तिहेतुतायां व्यभिचारो दर्शितः। न च निष्कम्पप्रवृत्तौ एव प्रामाण्यनिश्चयस्य हेतुता, सकम्पप्रवृत्तौ तु प्रामाण्यसंशयस्य। निष्कम्पत्वं सकम्पत्वञ्च सविषयिताविशेषः। एवञ्च तव सकम्पप्रवृत्त्यङ्गीकारेऽपि प्रामाण्यनिश्चयस्य हेतुतायां कथं व्यभिचार इति वाच्यम्। तथापि यत्र प्रामाण्यस्याप्रामाण्यस्य वा ज्ञानं नासीत्, आसीच्च केवलं जलादिज्ञानम्, तत्र प्रवृत्तिप्रदर्शनेन प्रामाण्यसंशयहेतुतायां व्यभिचारस्य दुर्वारत्वात्। न चैवं जलादिज्ञाने अप्रामाण्यनिश्चयकाले प्रवृत्तिः स्यादिति शङ्कनीयम्। अगृहीताप्रामाण्यकजलादिज्ञानत्वेन तद्धेतुतास्वीकारेण दोषादिति संक्षेपः। जललाभे सतीति। एतावता वक्ष्यमाणस्य प्रामाण्यव्यवस्थापकहेतोः स्वरूपासिद्धिशङ्का निराकृता। तदानीं पक्षस्यासत्त्वादाह पूर्वोत्पन्नमिति। समर्थेति। तद्विशेष्यकतत्प्रकारकेत्यर्थः। अन्वयुदाहरणासम्भवात् व्यतिरेक्युदाहरणं स्पष्टात्माह यन्नैवं तन्नैवमिति यत् अप्रमा, तत् असमर्थप्रवृत्तिजनकमित्यर्थः। व्यतिरेकिणा व्यतिरेकव्याप्तिमता। निश्चीयते अनुमीयते। द्वितीयादिज्ञानेषु द्वितीयादिजलज्ञानेषु। तत्सजातीयत्वलिङ्गेन पूर्वज्ञानसजातीयत्वरूपलिङ्गेन। समर्थप्रवृत्तिजनकत्वेनेति यावत्। गृह्यत इति। प्रामाण्यमनुमीयते इत्यर्थः।

प्रमाया गुणजन्यत्वमुत्पत्तौ परतस्त्वम्। प्रमासाधारणं कारणं गुणः, प्रमासाधारणं कारणं दोषः। तत्र प्रत्यक्षे विशेषणवद्विशेष्यसन्निकर्षो गुणः। अनुमितौ व्यापकवति व्याप्यज्ञानम्। उपमितौ यथार्थसादृश्यज्ञानम्। शाब्दज्ञाने यथार्थयोग्यताज्ञानम्। इत्याद्यूहनीयम्। पुरोवर्त्तिनि प्रकाराभावस्यानुव्यवसायेनानुपस्थितत्वात् अप्रमात्वं परत एव गृह्यते। पित्तादिदोषजन्यत्वादुत्पत्तौ परतस्त्वम्।

एवं प्रमायाः परतस्त्वं व्यवस्थाप्य उत्पत्तौ तन्निरूपयति प्रमाया इति। प्रमासाधारणमिति। प्रमात्वाधिकरणवृत्तिधर्मानवच्छिन्नप्रमानिष्ठकार्यतानिरूपितकारणताशालीत्यर्थः। तेन ज्ञानमात्रहेतुभूतात्मनः संयोगादेः भ्रमजनकपित्तादिदोषाणाञ्च व्युदासः। अप्रमासाधारणकारणत्वमप्येवमेव परिष्कर्त्तव्यम्। चतुर्विधप्रमायां हेतुभूतं गुणं क्रमेण उपपादयति तत्रेति। चतुर्विधप्रमाया मध्ये इत्यर्थः। इत्याद्यूहनीयमिति। "पीतः शङ्खः" इत्यादिभ्रमेऽपि पित्तादिर्दोषः। इदं रजतमित्यादि भ्रमे च चाकचक्यादिरिति ऊहनीयमित्यर्थः। अप्रमात्वस्य परतस्त्वं सयुक्तिकं दर्शयति पुरोवर्त्तिनीति। अनुपस्थितत्वादिति। अविषयीकरणादित्यर्थः। तथा च प्रत्यासत्तेरभावात् अप्रमात्वस्यानुव्यवसायेन ग्रहणं न सम्भवतीति भावः। अप्रमात्वं तदभाववद्विशेष्यकत्वविशिष्टतत्प्रकारकत्वम्। परत एव गृह्यत इति। अनुमानादित एव गृह्यत इत्यर्थः। अनुमानप्रयोगस्तु "इदं ज्ञानमप्रमा विसंवादिप्रवृत्तिजनकत्वात् यन्नैवं तन्नैवं यथा प्रमा" इति।

**ननु सर्वेषां ज्ञानानां यथार्थत्वात् अयथार्थज्ञानमेव नास्तीति। न च 'शुक्ताविदं रजतम्, इति ज्ञानात् प्रवृत्तिदर्शनादन्यथाख्यातिसिद्धिरिति वाच्यम्। रजतस्मृतिपुरोवर्त्तिज्ञानाभ्यामेव प्रवृत्तिसम्भवात्। उपस्थितेष्टभेदाग्रहस्यैव सर्वत्र प्रवर्त्तकत्वेन 'नेदं रजतम्' इत्यादौ अतिप्रसङ्गाभावादिति चेत्। न। सत्यरजतस्थले पुरोवर्त्तिविशेष्यकरजतत्वप्रकारकज्ञानस्य लाघवेन प्रवृत्तिजनकतया शुक्तौ अपि रजतार्थिप्रवृत्तिजनकत्वेन विशिष्टज्ञानस्यैव कल्पनात्।**

गुरुमतं निरस्यान्यथाख्यातिं व्यवस्थापयति नन्वित्यादिना। यथार्थत्वात् प्रमात्वात्। अयथार्थज्ञानमेव नास्तीति। तदभाववद्विशेष्यकतत्प्रकारकत्वरूपा यथार्थत्वज्ञानवृत्तिर्न इत्यर्थः। तेन न सिद्धासिद्धिभ्यां व्याघातः। अयथार्थत्वस्य तु प्रसिद्धिरिच्छादौ बोध्या। अन्यथाख्यातीति। तदनङ्गीकारे पुरोवर्त्तिविशेष्यकरजतत्वादिरूपेष्टतावच्छेदकप्रकारकज्ञानस्य संवादिविसंवादिसाधारणप्रवृत्तिजनकतया सच प्रवृत्तिरेव न स्यादिति भावः। रजतस्मृतीति। स्मृतनियतपूर्ववर्त्तिस्थ्यामित्यादिः। सम्भवादिति। तथा च प्रवृत्तिं प्रति विशिष्ट-

ज्ञानत्वेन कारणतैव नास्तीति तदनुरोधेन अन्यथाख्यातिकल्पनं न सम्भवतीति भावः। नन्वेवं यत्र 'नेदं रजतम्' इति बाधग्रहः, तत्रापि प्रवृत्तिः स्यात् अत आह—उपस्थितेति। एतावता स्मृतिरूपकारणापेक्षा स्फुटीकृता। इष्टभेदाग्रहस्यैव। रजतादिरूपेष्टभेदग्रहाभावस्यैव। एवकारेण विशिष्टज्ञानस्य प्रवर्त्तकत्वव्यवच्छेदः। सर्व्वत्रेति। रजते शुक्तौ चेत्यर्थः। रजतस्थले विशिष्टज्ञानस्यैव प्रवृत्तिं प्रति कारणत्वमिष्टव्यम्। अन्यथा धर्म्मधर्म्मिज्ञानयोः इष्टभेदाग्रहत्वरूपगुरुधर्मावच्छिन्नस्य कारणतापत्तेः। एवञ्च तत्प्रवृत्तिं प्रति अन्वयव्यतिरेकाभ्यां विशिष्टज्ञानस्य कारणतायां कल्पनीयायां लाघवात् सामान्यतः प्रवृत्तित्वावच्छिन्नं प्रति विशिष्टज्ञानत्वेन अनुगतकार्य्यकारणभावस्यैव कल्पनीयतया विसंवादिप्रवृत्तेरपि तत्कार्य्यतावच्छेदकावलीढतया तत्पूर्वं विशिष्टज्ञानस्य कल्पनीयत्वात् अन्यथाख्यातिर्निराबाधैवेति समाधत्ते—सत्यरजतेति। रजतत्वप्रकारकज्ञानस्येति। तादृशज्ञानत्वावच्छिन्नस्येत्यर्थः। प्रवृत्तिजनकतया प्रवृत्तित्वावच्छिन्नजनकतया। विशिष्टज्ञानस्यैव। पुरोवर्त्तिविशेष्यकेष्टतावच्छेदकप्रकारकज्ञानस्यैव। एतेन इष्टभेदाग्रहस्य व्यवच्छेदः। कल्पनात् अनुमानात्। तत्प्रयोगस्तु 'इयम् पुरोवर्त्तिविशेष्यकेष्टतावच्छेदकप्रकारकज्ञानजन्या, प्रवृत्तित्वात्, रजतस्थलीयप्रवृत्तिवत्' इति। स्यादेतत् प्रत्यक्षे सन्निकर्षस्य कारणतया रजतत्वांशे तदभावेन कथं शुक्तौ 'इदं रजतं' इति प्रत्यक्षमिति चेत्। नैवम्। अलौकिकसन्निकर्षस्यापि प्रत्यक्षजनकतया व्यवस्थापितत्वेन लक्षणाप्रत्यासत्तेरेव प्रकृते सम्भवात्।

अयथार्थस्त्रिविधः संशयविपर्य्ययतर्कभेदात्। एकस्मिन् धर्म्मिणि विरुद्धनानाधर्मवैशिष्ट्यज्ञानं संशयः। यथा स्थाणुर्वा पुरुषो वेति।

मिथ्याज्ञानं विपर्य्ययः। यथा शुक्तौ इदं रजतमिति। व्याप्यारोपेण व्यापकारोपस्तर्कः। यथा यदि वह्निर्न स्यात् तर्हि धूमोऽपि न स्यादिति।

अयथार्थानुभवं विभजते अयथार्थ इति। स्वप्नस्य मानसविपर्य्ययरूपत्वात् न त्रैविध्यविरोधः। संशयलक्षणमाह एकेति।

'घटपटौ' इति समूहालम्बनेऽतिव्याप्तिवारणाय एकेति 'घटो द्रव्यम्' इत्यादौ अतिव्याप्तिवारणाय विरुद्धेति। 'पटत्वविरुद्धघटत्ववान्' इत्यत्र अतिव्याप्तिवारणाय नानेति।

विपर्य्ययलक्षणमाह मिथ्येति। तदभाववति तत्प्रकारकनिश्चय इत्यर्थः। तर्कलक्षणमाह व्याप्येति। यद्यपि तर्को विपर्य्ययेऽन्तर्भवति। तथापि प्रमाणानुग्राहकत्वाद् भेदेन कीर्त्तनम्।

ननु अयथार्थानुभवस्य त्रैविध्यकथनं मूलेऽसङ्गतम् स्वप्नज्ञानस्य अनुभूतपदार्थस्मरणकफपित्तादिधातुशुभाशुभादृष्टैर्जायमानस्य बाधितार्थविषयकस्य अनुभवसिद्धत्वात् अत आह—स्वप्नस्येति। यद्यपि प्रदेशविशेषावस्थितमनःसंयोगः स्वप्नः। तथापि तदसमवायिकारणज्ञाने स्वप्नशब्दो भाक्त इत्यवधेयम्। चाक्षुषादिरूपत्वासम्भवादाह—मानसेति ; यत्तु स्मृतिरूपं स्वप्नज्ञानमिति तद्भाष्यादिविरुद्धमित्युपेक्षितम्। कोट्योरव्याप्यवृत्तित्वज्ञानोत्तरं जायमाने एकस्मिन् धर्म्मिणि घटतदभावोभयप्रकारकसमुच्चये अतिव्याप्तिवारणाय विरोधविषयकत्वस्य निवेशेऽपि नानेत्यस्यावश्यकतेति दर्शयितुमाह—पटत्वविरुद्धेति। नानेतीति। एकधर्म्मिनिष्ठविशेष्यतानिरूपितविरुद्धनानाधर्म्मनिष्ठप्रकारताकत्वाभावात् नातिव्याप्तिरिति भावः। न च विभिन्नरूपेणैकधर्म्मिविशेष्यविरुद्धानेकधर्म्मप्रकारकज्ञानेऽतिव्याप्तिरिति शङ्क्यम्। एकधर्मावच्छिन्नविशेष्यताघटितपरिष्कारकरणेन अदोषात् इति दिक्।

तन्त्रान्तरे ब्रह्मभिन्ने सर्वस्मिन् एव मिथ्याशब्दस्य प्रयोगदर्शनादाह तदभाववतीति। प्रमावारणायेदम्। तदभाववद्विशेष्यकतावच्छिन्नतत्प्रकारकताकेत्याद्यर्थविवक्षणान्न समूहालम्बनेऽतिप्रसङ्गः। संशयस्य इच्छायाश्च वारणाय संशयान्यज्ञानार्थकनिश्चयपदमिति संक्षेपः।

मूले व्याप्यारोपेणेति। आहार्य्यव्याप्यवत्ताभ्रमजन्य आहार्य्यव्यापकवत्ताभ्रमात्मक इत्यर्थः। आहार्य्यज्ञानमात्रेऽतिप्रसङ्गवारणाय तज्जन्य इति। निश्चयसत्त्वे शाखादौ करादिभ्रमात् 'अयं पुरुषः' इत्याद्याहार्य्यारोपः। तत्रातिव्याप्तिवारणाय प्रथमाहार्य्यपदम्। रजतत्वव्याप्याभाववत्ताग्राहकाले आहार्य्यं यद्रजतत्वव्याप्यवत्ताज्ञानम् तज्जन्ये 'इदं रजतम्' इत्यनाहार्य्यज्ञाने अतिव्याप्तिवारणाय द्वितीयमाहार्य्यपदम्। तर्के आपाद्यव्यतिरेकनिश्चयः आपाद्यापादकयोर्व्याप्तिनिश्चयश्च कारणमिति ध्येयम्। तर्कस्तु मानसविपर्य्ययरूप एवेति कथनयथार्थस्य

त्रैविध्यकथनमित्याह यद्यपीति। प्रमाणानुग्राहकत्वम्। प्रमाणेन प्रमायां जननीयायां प्रतिबन्धकविघटनद्वारोपयोगित्वम्। भेदेनेति। तर्कत्वरूपवैलक्षण्येनेत्यर्थः। तर्कस्य प्रमाणानुग्राहकत्वात्।

( इत्यनुभवनिरूपणम् )

स्मृतिरपि द्विधा यथार्था अयथार्था चेति। प्रमाजन्या यथार्था। अप्रमाजन्या अयथार्था।

स्मृतिं विभजते स्मृतिरिति।

सर्वेषामनुकूलवेदनीयं सुखम्।

प्रतिकूलवेदनीयं दुःखम्।

इच्छा कामः।

क्रोधो द्वेषः।

कृतिः प्रयत्नः।

विहितकर्मजन्यो धर्मः।

निषिद्धकर्मजन्योऽधर्मः।

बुद्ध्यादयोऽष्टौ आत्ममात्रविशेषगुणाः। बुद्धीच्छाप्रयत्ना नित्या अनित्याश्च। ईश्वरस्य नित्याः जीवस्य अनित्याः।

सुखं लक्षयति सर्वेषामिति। 'सुख्यहम्' इत्याद्यनुव्यवसायगम्यम् सुखत्वादिकमेव लक्षणम् यथाश्रुतं तु स्वरूपकथनमित्यर्थः।

ननु 'सर्वेषामनुकूलतया वेदनीयम्' इत्यादिमूलं सुखादिलक्षणपरं न सम्भवति परद्रव्योपभोगादिजन्यसुखे साधूनां द्वेषदर्शनादव्याप्तिरित्याशङ्कायां 'सुख्यहम्'

इत्यादि प्रत्यक्षसिद्धम् सुखत्वादिकमेव लक्षणमित्याह सुख्यहमित्याद्यन्विति। सुखत्वादीत्यादिना दुःखत्वपरिग्रहः। यथाश्रुतं त्विति। सर्वेषामनुकूलतया इत्यादिकमित्यर्थः।

**संस्कारः त्रिविधः वेगो भावना स्थितिस्थापकश्चेति। वेगः पृथिव्यादिचतुष्टयमनोमात्रवृत्तिः।**

संस्कारं विभजते संस्कार इति। संस्कारत्वजातिमान् संस्कारः। वेगस्याश्रयमाह वेग इति। वेगत्वजातिमान् वेगः।

**अनुभवजन्या स्मृतिहेतुर्भावना। आत्ममात्रवृत्तिः।**

भावनां लक्षयति। अनुभवेति। अनुभवध्वंसेऽतिव्याप्तिवारणाय स्मृतीति। आत्मादौ अतिव्याप्तिवारणाय अनुभवेति। स्मृतेरपि संस्कारजनकत्वं नवीनैरुक्तम्।



अनुभवेतीति। स्मृतिं संस्कारञ्च प्रत्यनुभवत्वेन कारणतां वदतां प्राचामभिप्रायः! तत्तद्विषयकस्मृतिं तादृशसंस्कारञ्च प्रति तत्तद्विषयकानुभवत्वेनैव हेतुता न तु तत्तद्विषयकज्ञानत्वेनानुभवत्वस्यापि जातित्वेन ज्ञानत्वापेक्षया गौरवाभावात्। न च विनिगमनाविरह इति शङ्क्यम्। व्याप्यधर्मपरिष्कारेण कारणत्वसम्भवे व्यापकधर्मस्यान्यथासिद्धिनिरूपकत्वादिति। नवीनाः पुनः तद्विषयकस्मृतिं तादृशसंस्कारञ्च प्रति तत्तद्विषयकज्ञानत्वेनैव हेतुता। न तु अनुभवत्वेन, संस्कारस्य फलनाश्यतया प्रथमस्मरणेनैवानुभवजन्यसंस्कारस्य नाशेन सकृदनुभूतस्य स्मरणोत्तरमस्मरणप्रसङ्गात्। न च स्वजन्यस्मरणस्य संस्कारनाशकत्वे स्मृतिसाधारणेन ज्ञानत्वेन हेतुत्वेऽपि घटपटादिरूपनानाविषयावगाहिना अनुभवेन जनितस्य तावद्विषयकसंस्कारस्य घटाद्येकैकगोचरस्मरणेनापि विनाशात् तदुत्तरं पटादिस्मरणानुपपत्तिः, तत्तद्विषयकसंस्काराभावात्। स्मृतिजन्यपटादिगोचरसंस्कारस्य च भिन्नविषयतया पटादिस्मारकत्वायोगात्। अतः स्वजन्यचरमस्मृतेरेवानायत्या तत्तद्व्यक्तित्वेन तत्र संस्कारनाशकतया अङ्गीकर्त्तव्यतया अनुभवत्वेन जनकतायामपि न दोष इति वाच्यम्।

अन्यूनविषयस्यैव फलस्य नाशत्वाङ्गीकारेण अदोषात्। जायते च पुनः पुनः स्मरणात् दृढतरः संस्कारः। दार्ढ्यं च उत्कर्षरूपो जातिविशेषो झटिति स्मृत्युत्पादप्रयोजकः। न च दैववशसम्पन्नात् झटित्युद्बोधकसमवधानादेव झटिति स्मृतिनियमोपपत्तौ न तत्प्रयोजकतया संस्कारगतो जातिविशेषः सिध्यतीति वाच्यम्। झटिति स्मृतेर्दैवाधीनझटित्युद्बोधकसमवधानाधीनत्वमुपगम्य संस्कारातिशयखण्डेन शास्त्रादौ अभ्यासस्यैवानुपपत्तेः। किञ्च परित्यज्य च निश्चिताव्यभिचारकं रूपं गृह्यमाणव्यभिचारकेण कारणत्वकल्पनं न सम्भवतीति नानुभवत्वेन स्मृतिसंस्कारहेतुतासम्भव इति प्राहुः। तन्मतं दर्शयति स्मृतेरपीति। अपिना अनुभवपरिग्रहः एतन्मतेन लक्षणे 'अनुभवजन्या' इति स्थाने 'ज्ञानजन्य' इति निवेशनीयम्।

**अन्यथाकृतस्य पुनः तदवस्थापादकः स्थितिस्थापकः कटादिपृथिवीवृत्तिः।**

**स्थितिस्थापकं लक्षयति अन्यथेति। संख्यादयोऽष्टौ नैमित्तिकद्रवत्ववेगस्थितिस्थापकाः सामान्यगुणाः। अन्ये रूपादयो विशेषगुणाः। द्रव्यविभाजकोपाधिद्वयसमानाधिकरणावृत्तिगुणवृत्तिजातिमत्त्वम् विशेषगुणत्वम्।**



द्रव्यविभाजकोपाधीति। पृथिवीत्वजलत्वादिरूपं यद्द्रव्यविभाजकोपाधिद्वयं प्रत्येकं तत्समानाधिकरणाः द्वित्वपृथक्त्वसंयोगादयः तदवृत्तिजातिमद्गुणत्वमित्यर्थः। रूपादिषु चतुर्षु तादृशं रूपत्वादिकं, सांसिद्धिकद्रवत्वे च द्रवत्वावान्तरजातिं स्नेहादिषु दशसु स्नेहत्वादिकं भावनायां संस्कारावान्तरजातिं चादाय लक्षणसमन्वयः। ननु इदं लक्षणमेकत्वादिष्वतिव्याप्तम्। एकत्वत्वादिजातेरपि तादृशत्वात्। न च तादृशोपाधिद्वयसमानाधिकरणावृत्तिगुणत्वन्यूनवृत्तिजातिशून्यगुणत्वमिति तदर्थः। एवं चैकत्वादिषु सङ्ख्यात्वादेः सत्त्वात् तादृशजातिशून्यत्वस्यासत्त्वेन नातिव्याप्तिरिति वाच्यम्। एवमपि परिमाणादिष्वतिव्याप्तिः। परिमाणत्वादेस्तादृशजातित्वासम्भवादिति चेत्। अत्र प्रवदन्त्यभिज्ञाः। यद्रूपावच्छिन्नसमानाधिकरणं यत्किञ्चिद्द्रव्यविभाजकोपाधिद्वयं तद्भिन्ना स्थितिस्थापकवृत्तिभिन्ना च या जातिः तद्वत्त्वे सति गुणत्वमिति तदर्थः। यद्रूपावच्छिन्नसामानाधिकरण्यस्य समवायसम्बन्धघटितस्यैव निवेशनीयतया यद्रूपपदेन घटत्वादेर्ग्रहीतुमशक्यत्वात् घटादौ नातिव्याप्तिरतो विशे-

त्वम् । स्थितिस्थापकेऽतिव्याप्तिवारणाय स्थितिस्थापकभिन्नेति, स्थितिस्थापकस्य पृथिव्यादिचतुष्टयवृत्तित्वमते तु न देयम् । रूपत्वादेर्यद्रूपपदेन सर्वं शक्यत्वेऽपि अवान्तरजातिमादाय रूपादिषु लक्षणसमन्वयः । पार्थिवानुष्णाशीतस्पर्शस्य वायवीयापेक्षया विजातीयस्यैव अनुभवसिद्धत्वात् । सङ्ख्यादयस्तु सामान्यगुणा इति न तेन्ने वैजात्यं जलपृथिव्यादिभेदेन सिद्धान्तसिद्धमतः तत्र नातिव्याप्तिः नाद्दृष्टजातिमद्भिन्नगुणत्वमेव सामान्यगुणानां लक्षणमवसेयमिति ।

( इति गुणनिरूपणम् )

चलनात्मकं कर्म । ऊर्द्ध्वं देशसंयोगहेतुरुत्क्षेपणम् ॥ १ ॥

अधोदेशसंयोगहेतुरपक्षेपणम् ॥ २ ॥

शरीरसन्निकृष्टसंयोगहेतुराकुञ्चनम् ॥ ३ ॥

शरीरविप्रकृष्टसंयोगहेतुः प्रसारणम् ॥ ४ ॥

अन्यत् सर्वं गमनम् ॥ ५ ॥



कर्मणो लक्षणमाह चलनेति । उत्क्षेपणादीनां कार्य्यभेदमाह ऊर्द्ध्वेति । शरीरेति । वक्रतासम्पादकं कर्म आकुञ्चनम् । ऋजुतासम्पादकं प्रसारणमित्यर्थः ।

मूलोक्तं सर्वसंग्राहकं न भवतीत्याह वक्रतेति ।

( इति कर्मनिरूपणम् )

नित्यमेकमनेकानुगतं सामान्यम् । द्रव्यगुणकर्मवृत्ति । परं सत्ता । अपरं द्रव्यत्वादि ।

सामान्यं लक्षयति नित्यमिति । संयोगेऽतिव्याप्तिवारणाय नित्यमिति । जलपरमाणुगतरूपे अतिव्याप्तिवारणाय एकेति । परमाणुपरिमाणादावतिव्याप्तिवारणाय अनेकेति । अनुगतत्वं समवेतत्वम् । घटाद्यत्यन्ताभावो घटाद्यनुगतोऽप्यसमवेत इति नाभावादावतिव्याप्तिः ।

नित्यमितीति। अत्र नित्यत्वं प्रागभावाप्रतियोगित्वम्, ध्वंसाप्रतियोगित्वं वा। एकत्वानिवेशेनापि संयोगादेर्वारणात् एतत्पदं स्वरूपकथनम् इति द्रष्टव्यम्।

( इति सामान्यनिरूपणम्। )

## नित्यद्रव्यवृत्तयो व्यावर्त्तका विशेषाः।

विशेषं लक्षयति नित्येति।

मूले व्यावर्त्तका इति। नित्यद्रव्याणां परस्परभेदसाधका इत्यर्थः। अथ विशेषपदार्थे किं प्रमाणम्। न च अत्यन्तसङ्कीर्णानां परमाणूनां भेदकधर्मं विना भेदासिद्धिरतो विशेषोऽङ्गीकर्त्तव्य इति वाच्यम्। एकत्वादिव्यक्तेरेव भेदकत्वसम्भवादिति चेत्। न। एतत्परमाणौ तत्परमाणुभेदसाधने एकत्वादेर्व्यभिचारितया एतदेकत्वादेरेव हेतुता वाच्या। न च तयोः परमाण्वोर्भेदासिद्धावेकत्वादावेतत्त्वं सुग्रहम्। एतत्त्वम् एतत्परमाणुसमवेतत्वम्। तस्मात् प्रतिनित्यद्रव्यं स्वीकर्त्तव्यो विशेषपदार्थः। स एव च स्वजातीयानां परस्परभेदसाधक इति तत्रापि विशेषान्तरापेक्षा नास्त्येव। अतो नानवस्था इति सम्प्रदायः।

( इति विशेषनिरूपणम्।



## नित्यसम्बन्धः समवायः। अयुतसिद्धवृत्तिः। ययोर्द्वयोर्मध्ये एकमविनश्यदपराश्रितमेवावतिष्ठते तावयुतसिद्धौ। अवयवावयविनौ, गुणगुणिनौ, क्रियाक्रियावन्तौ, जातिव्यक्ती, विशेषनित्यद्रव्ये चेति।

समवायं लक्षयति नित्येति। संयोगेऽतिव्याप्तिवारणाय नित्य इति। आकाशादावतिव्याप्तिवारणाय सम्बन्ध इति। अयुतसिद्धलक्षणमाह ययोरिति। 'नीलो घटः' इति विशिष्टप्रतीतिः विशेषणविशेष्यसम्बन्धविषया विशिष्टप्रत्ययत्वात् दण्डीति प्रत्ययवत् इति समवायसिद्धिः। अवयवावयविनाविति। द्रव्यसमवायिकारणमवयवः। तज्जन्यं द्रव्यमवयवि।

वैशेषिकमतसाधारण्येन समवायेऽनुमानं प्रमाणयति नील इति। समवायि-कारणस्य अन्त्यावयविनि सत्त्वात् द्रव्येति। परमाणुवारणाय जन्येति। अविनश्य-दवस्थमेवापराश्रितमवतिष्ठते विनश्यदवस्थं त्वनाश्रितं क्षणमवतिष्ठते यथा तन्त्वा-दिनाशे पटादिरिति मनसिकृत्य मूलेऽविनश्यदित्युक्तम्।

( इति समवायनिरूपणम् )।

अनादिः सान्तः प्रागभाव उत्पत्तेः पूर्वं कार्य्यस्य। सादिरन्तः प्रध्वंसः उत्पत्त्यनन्तरं कार्य्यस्य। त्रैकालिकसंसर्गावच्छिन्नप्रतियोगिता-कोऽत्यन्ताभावः, यथा भूतले घटो नास्ति इति। तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकोऽन्योन्याभावः, यथा घटः पटो नास्ति इति।

प्रागभावं लक्षयति अनादिरिति। आकाशादौ अति-व्याप्तिवारणाय सान्त इति। घटादौ अतिव्याप्तिवारणाय अनादिरिति। प्रतियोगिसमवायिकारणवृत्तिः प्रतियोगि-जनकः भविष्यतीति व्यवहारहेतुः प्रागभावः। ध्वंसं लक्षयति सादिरिति। घटादौ अतिव्याप्तिवारणाय अनन्त इति। आकाशादौ अतिव्याप्तिवारणाय सादिरिति। प्रतियोगिजन्यः प्रतियोगिसमवायिकारणवृत्तिः ध्वस्तव्यवहारहेतुः ध्वंसः। अत्यन्ताभावं लक्षयति त्रैकालिक इति। अन्योन्याभावेऽति-व्याप्तिवारणाय संसर्गावच्छिन्न इति। ध्वंसप्रागभावयोरति-व्याप्तिवारणाय त्रैकालिक इति। अन्योन्याभावं लक्षयति तादात्म्य इति। प्रतियोगितावच्छेदकारोप्यसंसर्गभेदात् एक-प्रतियोगिकयोरत्यन्ताभावान्योन्याभावयोर्बहुत्वम्। 'केवलदेव-दत्ताभावाद्दण्ड्यभावः' इति प्रतीत्या विशिष्टाभावः, 'एकसत्त्वे

द्वौ न स्तः' इति प्रतीत्या द्वित्वावच्छिन्नाभावः, संयोगसम्बन्धेन च घटवति समवायसम्बन्धेन घटाभावः सम्बन्धावच्छिन्नाभावः। तत्तद्घटाभावाद् घटत्वावच्छिन्नप्रतियोगिताकसामान्याभावस्यातिरिक्त एवमन्योन्याभावोऽपि।

संसर्गेति। तादात्म्यातिरिक्तसंसर्गेत्यर्थः। ध्वंसप्रागभावयोः प्रतियोगितावच्छेदकसम्बन्धो वर्त्तते इति मताभिप्रायेण त्रैकालिकेति विशेषणम्। अन्यथा अन्योन्याववारकेणैव तयोर्वारणात् तद्वैयर्थतापत्तेः। यदि संसर्गावच्छिन्नेत्यादेरन्योन्याभावभिन्नाभाव इत्यर्थः। तदा त्रैकालिकेति सिद्धान्तेऽपि सार्थकं त्रैकालिकत्वम् इह नित्यत्वरूपम्। मूले 'भूतले घटो नास्ति' इत्यत्र घटाभावांशे भूतलस्य विशेष्यत्वं सम्बन्धः, 'घटाभाववद्भूतलम्' इत्यत्र भूतलांशेऽभावस्य विशेषणत्वं संसर्ग इति वदतां प्राचामयमभिप्रायः। विशेष्यत्वविशेषणत्वे स्वरूपसम्बन्धविशेषौ न ज्ञानीयविषयताविशेषौ। न च विशेषणताख्यः स्वरूपसम्बन्ध एक एवास्तु 'भूतले घटो नास्ति' इति प्रतीतौ 'भूतलं घटाभाववत्' इति प्रतीतौ वैलक्षण्यस्य विशेषणत्वावच्छिन्नाधेयताविषयकत्वकल्पनेनैव निर्वाहादिति वाच्यम्। तादृशप्रतीत्योर्वैलक्षण्याय 'प्रथमायां विशेषणतावच्छिन्नाधेयता, द्वितीयायां विशेषणता संसर्गः' इत्युपेयते। किंवा "प्रथमायां विशेषणतावच्छिन्नाधारता, द्वितीयायां विशेष्यतावच्छिन्नाधारता' इत्यत्र विनिगमकस्य दुर्लभत्वात्। न च तादृशप्रतीत्योः संसर्गांशेऽविलक्षणत्वेऽपि विशेष्यविशेषणभावभेदात् वैलक्षण्योपपत्तिरित्युभयत्र विशेषणताया एव सम्बन्धता अस्तु इति वाच्यम्। तावतापि 'भूतले घटो नास्ति' "भूतलवान् घटाभाव" इत्यनयोः "भूतलं घटाभाववत्" "घटाभावे भूतलम्" इत्यनयोश्च प्रतीत्योर्वैलक्षण्यानिर्वाहात्। तस्मात् विशेष्यत्वविशेषणत्वनामकयोरुभयोः स्वरूपसम्बन्धविशेषयोः संसर्गता। तथाच "भूतलवान् घटाभावः" इत्यत्र घटाभावांशे भूतलस्य विशेष्यत्वसंसर्गो "घटाभावे भूतलम्" इत्यत्र च भूतलांशेऽभावस्य विशेषणतासंसर्गो बाधित इति भ्रमत्वनिर्वाह इति संक्षेपः। ध्वंसप्रागभावयोरिवैकप्रतियोगिकयोरत्यन्तान्योन्याभावयोः किमेकविधत्वम्। नेत्याह प्रतियोगितेति। आरोप्येति। प्राचीनमताभिप्रायेण। अत्र "यथायोग्यं प्रतियोगितावच्छेदकधर्मसंसर्गभेदोऽत्यन्ताभावबहुत्वप्रयोजकः" प्रतियोगितावच्छेदकधर्मभेदोऽन्योन्याभावबहुत्वप्रयोजक इति द्रष्टव्यम्। तदेव दर्शयति केवलेति। केवलदेवदत्ताभावाद्विशिष्टाभावः

अतिरिक्त इत्यन्वयः। अन्यथा केवलदेवदत्तवति "दण्डी नास्ति" इति प्रत्ययानापत्तेः। उभयाभावस्यातिरिक्तत्वे प्रतीतिं प्रमाणयति एकसत्त्वेऽपीति। "घटपटौ न स्तः" इत्यादौ घटत्वं पटत्वमुभयत्वं चेतत्त्रितयं प्रतियोगितावच्छेदकम् केवलघटवति केवलपटवति यत्किञ्चिदुभयवति तथा प्रत्ययात्। सम्बन्धभेदेनाभावस्यातिरिक्तत्वं दर्शयति संयोगेनेति। सामान्यविशेषभावयोर्भेदं दर्शयति तत्तदिति। अतिरिक्त इति। अन्यथा यत्किञ्चिद्घटवति "घटो नास्ति" इति प्रत्ययापत्तेः। एवमन्योन्याभावोऽपीति। अवच्छेदकभेदात् तत्तद्घटभेदः तत उभयभेदः घटभेदश्च अतिरिक्त इत्यर्थः।

घटत्वेन पटो नास्तीति व्यधिकरणधर्मावच्छिन्नाभावो नाङ्गीक्रियते। पटे घटत्वं नास्तीति तस्यार्थः। अतिरिक्तत्वे स केवलान्वयी।

प्रसङ्गादाह घटत्वेनेति। नाङ्गीक्रियत इति। अभावधियो विशिष्टवैशिष्ट्यावगाहिमर्य्यादोपजीवितया "घटत्वेन पटो नास्ति" इत्यादिप्रत्ययस्य विशिष्टवैशिष्ट्यानवगाहिनो घटत्वादेः प्रतियोगितावच्छेदकत्वव्यवस्थापकत्वाभावेन व्यधिकरणधर्मावच्छिन्नाभावे मानाभावादिति भावः। ननु तर्हि तादृशप्रत्ययस्य का गतिरित्यत आह पट इति। ननु "घटत्वेन पटो नास्ति" इति प्रतीतेः पटाधिकरणकघटत्वाभावावगाहित्वं न सम्भवति। असति बाधके तच्छब्दोल्लेखिप्रतीतेः तच्छब्दप्रतिपाद्यार्थविषयकत्वपरित्यागायोगात्। पटाधिकरणकघटत्वाभावस्य "घटत्वेन पटो नास्ति" इति शब्दात् कथमप्यप्रतीतेः। किं त्ववच्छिन्नप्रतियोगिताकत्वसम्बन्धेन अभावांशे स्वातन्त्र्येण घटत्वावगाहित्वमेव "अभावबुद्धिर्विशिष्टवैशिष्ट्यावगाहिमर्य्यादां नातिशेते" इति नियमस्तु न। एवञ्च व्यधिकरणधर्मावच्छिन्नाभावः सप्रमाण इति चेत्। अस्तु तर्हि अतिरिक्तत्वं तस्येत्याह अतिरिक्तत्व इति। स व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकः। केवलान्वयीति। प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिरूपविरोधिविरहादिति भावः।

सामयिकभावोऽप्यत्यन्ताभाव एव समयविशेषे प्रतीयमानः घटाभाववति घटानयने अत्यन्ताभावस्य अन्यत्र गमनाभावेऽपि अप्रतीतेर्घटापसरणे सति प्रतीतेर्भूतलघटसंयोगप्रागभावध्वंसयोर्घटात्यन्ताभावप्रतीतिनियामकत्वं कल्प्यते। घटवति तत्सं-

**योगप्रागभावध्वंसयोरसत्त्वादत्यन्ताभावस्याप्रतीतिः। घटापसरणे च संयोगध्वंससत्त्वात् प्रतीतिरिति।**

ननु भूतलादौ घटसत्त्वदशायां न तदभावबुद्धिरन्यदा तु जायते अतः सामयिकाभावोऽतिरिक्त एवाङ्गीकर्त्तव्य इति वदन्तं निराकर्त्तुमाह सामयिकेति। प्रतियोगिविरहसमये प्रतीयमानोऽत्यन्ताभाव एव सामयिकाभावः। न तूत्पत्तिविनाशशात्यतिरिक्त इति समुदितार्थः। ननु एवं भूतले घटस्यानयनदशायामपि तदभावस्य नित्यत्वेन सत्त्वात् प्रत्ययापत्तिरत आह घटाभाववतीति। नियामकत्वमेव समुपपादयति घटवतीति। तत्तत्कालावच्छिन्नभूतलादेरेव घटाद्यभावसंसर्गतया घटकाले च तच्छून्यकालविशिष्टभूतलादिरूपसंसर्गाभावेन तदा न तदत्यन्ताभावबुद्धिरित्यपि द्रष्टव्यम्।

**केवलाधिकरणादेव नास्तीति व्यवहारोपपत्तौ अभावो न पदार्थान्तरमिति गुरवः। तन्न। अभावानङ्गीकारे कैवल्यस्य निर्वक्तुमशक्यत्वात्।**



ननु अभावो मास्तु अतिरिक्तः पदार्थः यस्मिन्नधिकरणे घटो नास्तीत्यादिप्रत्ययः तस्मिन्नधिकरणे घटाद्यभावत्वकल्पनेनैव तथाप्रतीतिनिर्वाहात् कॢप्तधर्मिणि धर्मकल्पनाया अकॢप्तधर्मिकल्पनातो लघीयस्त्वादिति गुरुमतमाशङ्क्य निराचष्टे केवलेति। यद्यप्यनन्तेष्वधिकरणेषु धर्मकल्पनातोऽतिरिक्तैकधर्मिकल्पनस्यैव लघीयस्त्वादप्रोक्तन्यायस्यानवतारः। किञ्च अभावस्याधिकरणस्वरूपत्वे जलादौ विद्यमानस्य गन्धाद्यभावस्य जलादिरूपत्वादितरेन्द्रियग्राह्यतापत्तिरित्यादिदूषणानि प्रस्फुरन्ति। तथापि केवलाधिकरणादेवेति तद्वचननिरासादेव तन्निवृत्तिसम्भवे किमेतान्यपेक्षितानीत्यालोच्य तदेव निराकरोति अभावानङ्गीकार इति। अतिरिक्ताभावानङ्गीकार इत्यर्थः। अथ किमिदं कैवल्यम्। भूतलस्वरूपमिति चेत्। घटवद्भूतलस्यापि तदभावस्वरूपतापत्त्या तदानीमपि घटाभाववत्ताबुद्धिप्रसङ्गः। घटाभाववत्त्वमिति चेत् सिद्धमतिरिक्ताभावेनातः कैवल्यनिर्वचनमशक्यमित्याह कैवल्यस्येति।

**अभावाभावो भाव एव। नातिरिक्तः। अनवस्थाप्रसङ्गात्। ध्वंसप्रागभावाः प्रागभावध्वंसश्च प्रतियोग्येवेति प्राञ्चः। अभा-**

वाभावः अतिरिक्त एव। तृतीयाभावस्य प्रथमाभावरूपत्वात् नानवस्थेति नवीनाः।

ननु अभावस्यातिरिक्तत्वे तदभावोऽप्यतिरिक्तः तस्याप्यभावःतथेत्यनवस्था स्यादत आह अभावाभाव इति। ध्वंसेत्यादि। ध्वंसप्रागभावः प्रतियोगिस्वरूपः तत्प्रागभावरूपश्च। प्रागभावध्वंसस्तु प्रतियोगिरूपः, तद्ध्वंसरूपश्चेत्यर्थोऽवसेयः। तेन प्रतियोगिप्रागभावदशायामपि "ध्वंसो भविष्यति" इति प्रत्ययस्य, प्रतियोगिध्वंसदशायामपि 'प्रागभावो नष्टः' इत्यस्य चोपपत्तिः। तत्काले "द्रव्यत्वं नास्ति' इति प्रत्ययो जायते, 'द्रव्यत्वाभावः, इति न जायते इति वैषम्यनिर्वाहाय नास्तीति प्रत्यये दैशिकसम्बन्धावच्छिन्नाधेयत्वभानं परिकल्पनीयम्। इत्यञ्च घटाभावाभावादेर्घटादिरूपत्वे त्विह घटाभावो नास्तीति प्रत्ययस्य भ्रमत्वमेव स्यात्। भावस्य विशेषणताविशेषेण वृत्त्यनङ्गीकारात्। अतः अभावाभावोऽतिरिक्तो न तु भावरूप इति नवीनमतं दर्शयति अभावेति। तर्हि अनवस्थेत्यत आह तृतीयेति।

सर्वेषामपि पदार्थानां यथायथमुक्तेष्वन्तर्भावात् सप्तैव पदार्था इति सिद्धम्।



ननु "प्रमाण-प्रमेय-संशय-प्रयोजन-दृष्टान्त-सिद्धान्ता-ऽवयव-तर्क-निर्णय-वाद-जल्प--वितण्डा--हेत्वाभास-छल-जाति-निग्रह-स्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः" इति न्यायशास्त्रे षोड़षपदार्थानामुक्तत्वात् कथं सप्तैवेत्यत आह। सर्वेषामिति। सर्वेषां सप्तस्वेवान्तर्भाव इत्यर्थः। 'आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम्' इति द्वादशविधं प्रमेयम्। प्रवृत्तिर्धर्माधर्मौ। रागद्वेषमोहाः दोषाः। राग इच्छा। द्वेषो मन्युः। मोहः शरीरादौ आत्मभ्रमः। प्रेत्यभावो मरणम्। फलं भोगः। अपवर्गो मोक्षः। स च स्वसमानाधिकरणदुःखप्रागभावासमानकालीनदुःखध्वंसः। प्रयोजनम् सुखप्राप्तिः दुःखहानिश्च। दृष्टान्तो महानसादिः। प्रामाणिकत्वेन अभ्युपगतोऽर्थः सिद्धान्तः निर्णयो निश्चयः। स च

प्रमाणफलम्। तत्त्वबुभुत्सोः कथा वादः। उभयसाधनवती विजिगीषुकथा जल्पः। स्वपक्षस्थापनहीना वितण्डा। कथा नाम नानावक्तृकः पूर्वोत्तरपक्षप्रतिपादकवाक्यसन्दर्भः। अभिप्रायान्तरेण प्रयुक्तस्यार्थान्तरं प्रकल्प्य दूषणं छलम्।

परमकारुणिकेन मुनिना दुःखपङ्कमग्नं जगदुद्दिधीर्षुणा प्रणीतं "प्रमाणप्रमेय" इत्यादिसूत्रं तद्विरोधं परिहर्त्तुमाक्षिपति नन्विति। प्रत्यक्षप्रमाणस्य द्रव्ये, अनुमानादीनां च गुणेऽन्तर्भावस्य स्फुटत्वात् प्रमेयादीनां द्रव्यादिषु अन्तर्भावमाह आत्मेत्यादिना। आत्मशरीरेन्द्रियाणां द्रव्ये, अर्थस्य पृथिव्यादिरूपस्य द्रव्यादिषु, बुद्धेर्गुणे, अन्तरिन्द्रियस्य मनसः द्रव्येऽन्तर्भावः। एवमन्येऽपि यथायथमन्तर्भावो द्रष्टव्यः। धर्माधर्माविति। तज्जनिकेत्यर्थः। एतत् च स्फुटम् आकरे। रागः इच्छाविशेषः। मरणमिति। मरणानन्तरभावि जननमित्यर्थः। तथा च परव्युत्पत्तिः प्रेत्य मृत्वा भावो जननमिति। चरमप्राणशरीरसंयोगध्वंसो मरणम्। आद्यशरीरप्राणसंयोगो जननम्। मुक्तात्मसंयोगध्वंसवतः शवस्य मुक्तत्वापत्तिवारणाय दुःखध्वंस इति। दुःखध्वंसवताम् अस्मदादीनामपि मुक्तत्वापत्तिवारणाय कालीनान्तम्। अन्यदीयदुःखप्रागभावसमानकालिकदुःखध्वंसवतां मुक्तात्मनाममुक्तत्वप्रसङ्गात् समानाधिकरणेति दुःखप्रागभावविशेषणम्। न च समानाधिकरणदुःखासमानकालीनेत्यनेनैव सुषुप्तिकालिकदुःखध्वंसस्याप्यशेषदुःखक्षणवृत्तेर्वारणात् प्रागभावेति व्यर्थमिति वाच्यम्। यथासन्निवेशवैयर्थ्याभावादिति दिक्। संशयस्य निरूपितत्वात् प्रयोजनस्वरूपं दर्शयति प्रयोजनमिति। उभयसाधनवतीति। परपक्षनिराकरणस्वपक्षसाधनवति। इदञ्च वितण्डाया अतिव्याप्तिवारणायेति ध्येयम्। स्वपक्षेति। अत्र विजिगीषु कथेत्यनुवर्त्तते। नानेति। एकेन पूर्वपक्षः क्रियते, अन्येन च समाधानम् एवं क्रमेण नानाकर्तृकत्वं वाक्यसमूहस्यावसेयम्। छलमिति। यथा 'नवकम्बलोऽयं देवदत्तः' इति। नवतात्पर्य्येण प्रयुक्तस्य नवत्वसंख्याविशिष्टमर्थान्तरं परिकल्प्य कश्चिद्दूषयति 'नास्य नव कम्बलाः सन्ति अतिदरिद्रत्वात्' इत्यादि।

असदुत्तरं जातिः। साधर्म्य-वैधर्म्य-उत्कर्षाप-कर्षवर्ण्यावर्ण्यविकल्पसाध्यप्राप्त्यप्राप्तिप्रसङ्गप्रतिदृष्टान्ता अनुत्पत्तिसंशयप्रकरण-

**इत्यर्थापत्त्यविशेषोपपत्त्युपलब्ध्यनुपलब्धि-नित्यानित्यकार्य्याकार्य्यसमा जातयः।**

असदुत्तरमिति। उत्तरस्यासत्त्वं तु स्वसाधकतासाधारण्येन परसाधकतासाधकतया स्वव्याघातकत्वम् तथा च स्वव्याघातकमुत्तरं जातिरिति वचनं पर्य्यवस्यति। तदवान्तरभेदात् दर्शयति साधर्म्येत्यादिना। द्वन्द्वान्ते श्रूयमाणस्य समाशब्दस्य प्रत्येकं योगः। साधर्म्यसमा वैधर्म्यसमेत्यादयः चतुर्विंशतिर्जातयः।

साधर्म्येण स्थापनाहेतुदूषकमुत्तरम् साधर्म्यसमा। यथा आत्मा सक्रियः क्रियाहेतुगुणवत्त्वाल्लोष्टवत् क्रियाहेतुगुणश्चात्र क्रियाजनकवायुसंयोगादिरेवेति स्थापनायामुत्तरं, यदि सक्रियसाधर्म्यात् सक्रियः, तदा विभुत्वरूपनिष्क्रियसाधर्म्यान्निष्क्रिय एव किं न स्यात्। न च अत्र किञ्चित् विनिगमकमस्ति' इति।

वैधर्म्येण दूषकम् उत्तरम् वैधर्म्यसमा। यथा तत्रैव "क्रियावतो लोष्टस्य साधर्म्याद्यदि क्रियावानात्मा तदा विभुत्वरूपतद्वैधर्म्यान्निष्क्रिय एव किं न स्यात्। न हि "तत्साधर्म्यात् क्रियावता भवितव्यम्। तद्वैधर्म्यान्निष्क्रियेण न भवितव्यम्" इत्यत्र किञ्चित् नियामकमस्ति" इति।

परोक्तसाधनादेव तदव्यापकस्य धर्मस्य पक्षे आपादनम् उत्कर्षसमा। यथा शब्दो नित्य नित्यः कृतकत्वाद् घटवदित्यादौ कश्चिदेवमाह "यदि कृतकत्वेन हेतुना अशब्दो घटवदनित्यः स्यात्, तर्हि तेनैव हेतुना शब्दो घटवत् सावयवः स्यात्" इति।

परोक्तदृष्टान्तसाधर्म्येण पक्षे पराभिमतधर्मान्तरस्याभावसाधनम् अपकर्षसमा। यथा तस्मिन्नेवानुमाने 'यदि कृतकत्वेन शब्दो घटवदनित्यः स्यात्, तर्हि तेनैव शब्दो घटवदश्रावणः स्यात्" इति।

वर्ण्यस्य स्थापनीयस्य दृष्टान्तधर्मस्य पक्षे साधनं वर्ण्यसमा। यथा पूर्वोक्तानुमाने 'क्रियाजनकनोदनाख्यसंयोगवत्त्वात् लोष्टादेर्भवतु क्रियावत्त्वं आत्मनस्तु क्रियावत्त्वे तज्जनकनोदनाख्यसंयोगवत्त्वमपि स्यात्' इति।

साध्यहेत्वोर्धर्मयोरपि पक्षे तुल्यतासाधनम् अवर्ण्यसमा। यथा तत्रैवानुमाने 'लोष्टादिगतनोदनादिरूपक्रियाहेतुगुणवत्त्वमात्मन्यसिद्धम्। तथा च तुल्यतया यथा असिद्धेन क्रियाहेतुगुणेन आत्मनि क्रियावत्त्वं साध्यते तथा तादृशेन क्रियावत्त्वेन तज्जनकगुणवत्त्वमपि किमिति न साध्यते नियामकाभावात्' इति।

दृष्टान्तविकल्पं प्रदर्श्य दार्ष्टान्तिकविकल्पकथनम् विकल्पसमा। यथा तत्रैवा-नुमाने 'क्रियाहेतुगुणयुक्तं किञ्चिद्गुरु, यथा लोष्टादिकं किञ्चित्। लघु, यथा वायुः एवं क्रियाहेतुगुणयुक्तं किञ्चित् क्रियावत् स्यात् यथा लोष्टादिकिञ्चिदक्रियम् यथात्मा पूर्वविकल्पो भवत्ययं तु न भवतीत्यत्र किं नियामकं स्यादिति।

दृष्टान्तस्य पक्षतुल्यताकथनं साध्यसमा। साध्यशब्दोऽत्र पक्षवाची यथा तत्रैव यदि 'तथा लोष्टः तथा आत्मा' इति त्वयोच्यते, तदा 'यथा आत्मा तथा लोष्ट' इत्यप्यायातम्। तथा च यद्यात्मनि क्रियावत्त्वं साध्यते तर्हि लोष्टेऽपि तत्साधनीयं नेति चेत्। तर्हि यथा लोष्टस्तथात्मेति न वाच्यम्। लोष्टसदृश आत्मा, नात्म सदृशो लोष्ट इत्यत्र नियामकाभावात्' इति।

प्राप्त्या प्रत्यवस्थानं प्राप्तिसमा। प्राप्तिश्च साध्यहेत्वोः सामानाधिकरण्यम्। यथा तत्रैव 'क्रियाहेतुगुणवत्त्वेनैव किमिति क्रियावत्त्वं साध्यते किमिति क्रियाव-त्त्वेन तादृशगुणवत्वम्। न। उभयोरविशेषात्' इति।

अप्राप्त्या प्रत्यवस्थानम् अप्राप्तिसमा। यथा तत्रैव 'पूर्वोक्तदोषादप्राप्तस्य हेतोः साध्यसाधकत्वं वाच्यम्। तथा चाप्राप्तत्वाविशेषात् स सर्वः सर्वं साधयेदिति। अयमेव हेतुः साध्याभावं किमिति न साधयेदित्यत्र विनिगमकाभावात्' इति।

साधनपरम्पराप्रश्नः प्रसङ्गसमा। यथा 'क्रियावत्त्वे क्रियाहेतुगुणवत्त्वम् साध-नम्। तत्र किं साधनम्। न हि साधनं विना कस्यचित् सिद्धिरस्ति एवं तत्रापि किं साधनमि'त्यादि।

दृष्टान्तान्तरेण साध्याभावसाधनं प्रतिदृष्टान्तसमा। यथा तत्रैव 'लोष्टदृष्टान्तेन क्रियावत्त्वे साधिते निष्क्रियाकाशदृष्टान्तेन आत्मनो निष्क्रियत्वमेव किं न स्यात्। 'लोष्टदृष्टान्तेन क्रियावत्वम्, आकाशदृष्टान्तेन निष्क्रियत्वं न' इत्यत्र नियामका-भावात्' इति।

अनुत्पत्त्या प्रत्यवस्थानमनुत्पत्तिसमा। यथा 'घटो न नित्यः जन्यत्वात्' इत्यादौ कश्चिदाह यदि जन्यत्वमनित्यत्वे प्रमाणम्, तदा घटे एतत्त्वोत्पत्तेः पूर्वं तदभावान्नित्यत्वम्। नित्यश्चेत्, तदा अनुत्पन्न एवेति।

साधारणधर्मं प्रदर्श्य संशयोद्भावनं संशयसमा। यथा 'शब्दोऽनित्यः कार्य्यत्वात्' इत्यादौ शब्दस्यानित्यत्वेन घटेन सहकार्य्यत्वरूपं साधर्म्यं यथास्ति, तथा नित्येन शब्दत्वेन सह श्रावणप्रत्यक्षविषयत्वं साधर्म्यमस्तीति उभयसाधर्म्यदर्शनात् संशयः स्यात् एकपरिशेषे नियामकाभावात्' इति।

वादुक्तहेतौ: साध्यविपरीतसाधकं हेत्वन्तरोद्भावनं प्रकरणसमा। सत्प्रति-पक्षोदाहरणमेवात्रोदाहरणं बोध्यम्।

कालत्रयेऽपि हेतुत्वासम्भवेन अहेतुत्वकथनमहेतुसमा। यथा 'कार्य्यत्वादिरूपसाधनम साध्यादनित्यत्वात् पूर्वकालवृत्ति चेत्, तदा अनित्यत्वरूपसाध्यस्य तदानीमभावात् कस्य साधकम् अथ पश्चात्कालवृत्ति चेत् तदा पूर्वकाले साधनाभावात् कस्य साध्यमनित्यत्वम् यदि चोभयमेककालवृत्ति किं कस्य साधनं किं कस्य साध्यं विनिगमकाभावादिति। हेतुसमेति पाठे तु कालत्रयेऽपि हेतुत्वस्यासम्भवकथनं हेतुसमेत्यर्थ:।

अर्थापत्तिपुरस्कारेण साध्याभावोद्भावनं अर्थापत्तिसमा। यथा 'पूर्वोक्तानुमाने शब्दस्यानित्यसाधर्म्यादनित्यत्वं यदि, तदार्थापत्त्यासिद्धं नित्यसाधर्म्यान्नित्यत्वमपि एकतरावधारणे नियामकाभावादि'ति।

सर्वाविशेषप्रसङ्गोद्भावनमविशेषसमा। यथा तत्रैव 'कृतकत्वादिना अनित्यघटादिसाधर्म्येण शब्दस्यानित्यत्वं, तदा प्रमेयत्वादिरूपेण तत्साधर्म्येण सर्वस्यैवानित्यत्वं स्यात् मदुक्तसाधर्म्येण तत् सिध्यति न तु त्वदुक्तेनेत्यत्र नियामकाभावादि"ति।

उभयपक्षसाधर्म्येण साधनोपपत्तिकथनमुपपत्तिसमा। "यदि चानित्यत्वसाधनं कार्य्यत्वमुपपद्यत इति शब्दस्यानित्यत्वम्, तदा नित्यत्वसाधनमपि किञ्चिदुपपद्यत इति नित्यत्वं किं न स्यात्" इति।

वाद्युपदर्शितसाधनाभावेऽपि साध्यस्योपलब्धिकथनम् उपलब्धिसमा। यथा "शब्दोऽनित्य: प्रयत्नानुविधायित्वात् घटवत्" इत्यत्र प्रयत्नं विनापि वायुनोदनवशात् वृक्षशाखाभङ्गजन्योपलब्धेर्न प्रयत्नानुविधायित्वं शब्देऽस्ति इति।

वादिना अनुपलब्धिवशात् कस्यचित् पदार्थस्यानङ्गीकारेऽनुपलब्धिवशादेव वाद्यभिमतस्यापि यत्किञ्चित्पदार्थस्याभावसाधनमनुपलब्धिसमा। यथा "जलादेर्विद्यमानस्याप्यावरणवशादनुपलब्धि: तद्वत् उच्चारणात्पूर्वं शब्दस्य विद्यमानस्याप्यावरणवशादनुपलब्धिरित्येतन्मतं वादिना दूष्यते यद्यावरणवशाच्छब्दो नोपलभ्यते। तदा जलाद्यावरणमिव शब्दाद्यावरणमप्युपलभ्येतेति। अत्रोत्तरं यदि भवद्भिरनुपलब्धित आवरणवशाच्छब्दो नोपलभ्यते तदानुपलब्धेरनुलब्ध्याभावे सिद्धे तदभावादावरणसिद्धि:" इति।

धर्मस्य नित्यत्वानित्यत्वविकल्पाद्धर्मिणो नित्यत्वसाधनं नित्यसमा। यथा 'शब्दस्य यदनित्यत्वं भवद्भिरुच्यते तन्नित्यमनित्यं वा यदि नित्यं, तदा शब्दवृत्तेरेव

तस्य सदातनत्वाच्छब्दस्यापि तथात्वमागतम्। अथानित्यं तदा शब्दे कदाचित् अनित्यत्वाभावोऽस्तीति नित्य एव शब्द इत्युभयथापि शब्दस्य नित्यत्वं" इति।

अनित्यदृष्टान्तसाधर्म्यात् सर्वानित्यत्वप्रसङ्गोद्भावनमनित्यसमा। यथा "यद्य-नित्येन घटेन सादृश्याच्छब्दोऽनित्यः इत्युच्यते, तदा येन केनचिद्धर्मेण सर्वस्यैव तत्सदृशत्वात् सर्वस्यानित्यत्वप्रसङ्गः" इति।

वाद्युक्तहेतोरन्यकार्य्येणापि सम्भवाभिधानं कार्य्यसमा। यथा तत्रैव प्रयत्नानु-विधायित्वमुभयथापि सम्भवति घटादिवत् शब्दस्वरूपोत्पत्तौ जलादिवदावरकनि-वृत्तौ च उभयत्रापि प्रयत्नानुविधायित्वदर्शनात्। तथा च तस्यावरकनिवृत्तिरूप-कार्य्यान्तरस्य सम्भवान्नानित्यत्वनियतत्वमिति।

क्वचित् कारणसमेति पाठः। तत्रापि "कारणस्य प्रयत्नानुविधायित्वस्यो-भयत्र शब्दस्योत्पत्तौ तदावरकनिवृत्तौ च समत्वाभिधानम्" इति रीत्या उक्तम् एवार्थे पर्य्यवसानमवसेयम्। अत्र ग्रन्थगौरवभयात् सूक्ष्मप्रकारा न दर्शिताः। अभियुक्तैरन्यत्र तेऽनुसन्धेयाः।



**वादिनोपजयहेतुर्निग्रहस्थानम्। प्रतिज्ञाहानिः, प्रतिज्ञा-न्तरं, प्रतिज्ञाविरोधः, प्रतिज्ञासन्न्यासः, हेत्वन्तरम्, अर्थान्तरम्, निरर्थकम्, अविज्ञातार्थम्, अपार्थकम्, अप्राप्तकालं, न्यूनम्, अधिकम्, पुनरुक्तम्, अननुभाषणम्, अज्ञानम्, अप्रतिभा, विक्षेपो, मतानुज्ञा, पर्य्यनुयोज्योपेक्षणं, निरनुयोज्यानुयोगः, अपसिद्धान्तः, हेत्वाभासाश्च निग्रहस्थानानि। शेषं सुगमम्।**

निग्रहस्थानं लक्षयति वादिन इति। इदञ्च यद्यपि छलादावव्याप्ति। तथा-प्यर्थान्तरादिरूपनिग्रहस्थानमध्येऽन्तर्भावात् अदोषः। छलत्वादिनापि ज्ञानस्योप-योगित्वात् पृथगुपादानं हेत्वाभासवत्। तस्यावान्तरभेदान् दर्शयति प्रतिज्ञेत्या-दिना। तत्र प्रतिज्ञातार्थविरुद्धाभ्युपगमः प्रतिज्ञातार्थपरित्यागो वा प्रतिज्ञाहानिः। यथा "शब्दो नित्यः प्रत्यक्षगुणत्वात्" इत्यत्र "सोऽयं गकारः" इत्यादि प्रत्यभिज्ञा-बलात् परेण बाधे उद्भाविते "अस्तु तर्हि नित्यः शब्दः" इति नित्यत्वमङ्गीकुर्वन् वादिशब्दस्यानित्यत्वप्रतिज्ञां जहाति" ॥१॥

परोक्तदोषोद्दिधीर्षया पूर्वानुक्तविशेषणविशिष्टतया प्रतिज्ञातार्थकथनं तिज्ञा-

न्तरम्। यथा "क्षित्यादिकं गुणजन्यं कार्य्यत्वात्" इत्यत्र अदृष्टजन्यत्वेन सिद्धसाधनोद्भावने 'सविषयक' इति गुणविशेषणदानम् ॥२॥

स्वोक्तसाध्यविरुद्धहेतुकथनं प्रतिज्ञाविरोधः। यथा "द्रव्यं गुणभिन्नं, रूपादितः पृथक्त्वेनानुपलभ्यत्वात्" इति ॥३॥

स्वोक्तेऽर्थे परेण दूषिते तदपलापः प्रतिज्ञासन्न्यासः। यथा "शब्दो नित्यः ऐन्द्रियकत्वात्" इत्युक्ते परेण सामान्ये व्यभिचारमुद्भाव्य दूषिते स्वोक्तमपलपति 'केनोच्यते शब्दो नित्यः' इति ॥४॥

परोक्तदूषणोद्दिधीर्षया पूर्वोक्तहेतुकोटौ विशेषणान्तरोपादानं हेत्वन्तरम्। यथा "'शब्दोऽनित्यः प्रत्यक्षत्वात्" इत्यत्र सामान्ये व्यभिचारोद्भावने "जातिमत्त्वे सति" इति विशेषणदानम् ॥५॥

प्रकृतानुपयुक्तार्थकथनमर्थान्तरम्। यथा 'नित्यः शब्दः अस्पर्शवत्त्वात्' इति हेतुः। हेतुपदञ्च हिनोतेस्तुनि प्रत्यये निष्पन्नम्, पदञ्च सुप्तिङन्त' इत्यादि ॥६॥

अवाचकशब्दप्रयोगो निरर्थकम्। यथा 'शब्दोऽनित्यः जबगडदशत्वात्' इत्यादि ॥७॥

परिषत्प्रतिवाद्यबोधप्रयोजककपदप्रयोगः अविज्ञातार्थम्। तत्र 'क्लिष्टान्वयमप्रसिद्धार्थकं त्वरितोच्चारितम्' इत्यादि रूपम् ॥८॥

परस्परानन्वितार्थकपदसमूहोऽपार्थकम्। यथा 'शब्दो घटः पटो नित्यमनित्यञ्च प्रमेयत्वात्' इत्यादि ॥९॥

अवयवानां व्युत्क्रमेण कथनमप्राप्तकालम्; यथा 'शब्दत्वाच्छब्दोऽनित्यः' इत्यादि ॥१०॥

यत्किञ्चिदवयवशून्यावयवाभिधानं न्यूनम्। स्पष्टम् ॥११॥

अधिकहेत्वादिकथनमधिकम्। यथा "शब्दोऽनित्यः शब्दत्वात् श्रावणत्वाच्च" इत्यादि ॥१२॥

अनुवादं विना कथितस्य पुनः कथनं पुनरुक्तम्। यथा 'शब्दो नित्यः शब्दोऽनित्यः' इत्यादि ॥१३॥

परिषदा त्रिरभिहितस्याप्यननुवादः अननुभाषणम् ॥१४॥

परिषदा विज्ञातस्य वादिना त्रिरभिहितस्यापि वाक्यार्थस्याबोधः अज्ञानम् ॥१५॥

उत्तरार्हे परोक्ते बुद्धापि उत्तरस्यास्फूर्त्तिवशात्तूष्णीम्भावः अप्रतिभा ॥१६॥

असम्भवत्कालान्तरककार्य्यव्यासङ्गमुद्भाव्य कथाविच्छेदो विक्षेपः ॥१७॥

स्वपक्षे दोषमनुद्धृत्य परपक्षे दोषाभिधानं मतानुज्ञा ॥ १८ ॥

उद्भावनार्हपरकीयनिग्रहस्थानानुद्भावनं पर्य्यनुयोज्योपेक्षणम् ॥१९॥

निग्रहस्थानरहिते निग्रहस्थानोद्भावनं निरनुयोज्यानुयोग: ॥२०॥

एकसिद्धान्तमतमाश्रित्य प्रवृत्तौ तद्विरुद्धसिद्धान्तमतमालम्ब्योत्तरदानम् अप-सिद्धान्त: ॥२१॥

प्रतिज्ञाहान्यननुभाषणाज्ञानाप्रतिभाविक्षेपपर्य्यनुयोज्योपेक्षणानामभावे अन्येषां हेत्वाभासव्यतिरिक्तग्रहस्थानानां गुणे, हेत्वाभासानाञ्च द्रव्यादिष्वन्तर्भावो यथायथं बोध्य:। अतिरिक्त: सूत्रार्थ: सुगम इत्यभिप्रायेणाह शेषमिति।

**ननु करतलानलसंयोगे सत्यपि प्रतिबन्धके सति दाहानुपपत्ते: शक्ति: पदार्थान्तरमिति चेत्। न। प्रतिबन्धकाभावस्य कार्य्यमात्रे कारणत्वेन शक्तेरनुपयोगात्। कारणत्वस्यैव शक्तिपदार्थत्वात्। ननु भस्मादिना कांस्यादौ शुद्धिदर्शनादाधेयशक्तिरङ्गीकार्य्येति चेत्। न। भस्मादिसंयोगसमानकालीनास्पृश्यस्पर्श-प्रतियोगिकयावदभाव-सहित-भस्मादि-संयोग-ध्वंसस्य शुद्धिपदार्थत्वात्।**

ननु अनलसंयोगे सत्यपि मण्यादिसमवधाने दाहो न जायत इति मण्यादे: प्रतिबन्धकता वाच्या। सा च वह्नौ दाहानुकूलशक्तिस्वीकार एव निर्वहति। प्रतिबन्धकताया: कार्य्यानुकूलशक्ति विघटकत्वरूपत्वात्। अतस्तदन्यथानुपपत्तिसिद्धाया: शक्तेरतिरिक्तत्वात् 'सप्तैव पदार्था:' इत्यसङ्गतमिति प्राभाकर: शङ्कते नन्विति।

ननु एवं शक्तिसिद्धावपि तस्यातिरिक्तत्वासिद्धिरिति चेन्न। यतो न ताव-द्द्रव्यात्मिका शक्ति: गुणादिवृत्तित्वात्। अत एव न गुणकर्मान्यतररूपा, न च सामान्याद्यन्यतमरूपा उत्पत्तिविनाशशालित्वात्। एवञ्चातिरिक्तपदार्थत्वसिद्धिरिति।

ननु प्रतिबन्धकत्वं न कार्य्यानुकूलशक्तिविघटकत्वम्। अपि तु कारणीभूताभावप्रतियोगित्वम्। तच्च मण्यभावस्य हेतुत्वादेवोपपद्यते। मणिसमवधानदशायाञ्च तदभावरूपकारणान्तराभावादेव दाहानुत्पत्तिसम्भव:। इत्यञ्चातिरिक्तशक्तिस्वीकारोऽनुचित इत्याशयेन समाधत्ते प्रतिबन्धकाभावस्येति।

ननु 'दाहोत्पादे च वह्नि: शक्त:' इति व्यवहारान्यथानुपपत्त्या सेत्स्यतीति अति-

रिक्तशक्तिरित्याशङ्क्य तस्याः कारणतारूपत्वेऽपि व्यवहारोपपत्तेर्नातिरिक्ता शक्तिरित्याह कारणत्वस्येति।

ननु मण्याद्यभावस्य हेतुत्वे मणिसमवधानदशायां सत्यप्युत्तेजके दाहो न स्यात्। मन्मते तु मण्याद्यपसारणदशायामिवोत्तेजकसमवधानदशायामपि वह्नौ दाहानुकूलशक्त्यन्तरोत्पत्तेरङ्गीकारेण न दोष इति चेत्। न। उत्तेजकाभावविशिष्टमण्याद्यभावस्य कारणत्वाङ्गीकारेण अदोषात्। न चोत्तेजकानामननुगतत्वात् तत्तदुत्तेजकाभावकूटविशिष्टमण्याद्यभावस्यैव कारणतायाः कल्पनीयतया गौरवमिति वाच्यम्। दाहानुकूलशक्तिं प्रति एतादृशकारणतायाः तवाप्यावश्यकत्वात् अनन्तशक्तिः तत्प्रागभावध्वंसकल्पने महागौरवादिति संक्षेपः।

ननु एवमपि कांस्यादेरस्पृश्यवस्तुस्पर्शे सति न भोजनादिरूपकार्य्यार्हता शक्तिमत्कांस्यादेरेव तदर्हत्वात् अस्पृश्यस्पर्शे सति शक्तेर्नाशात् भस्मसंयोगे पुनः शक्तेरुत्पादात् तदर्हता। एवञ्च कांस्यादौ आधेयशक्तिः स्वीकार्य्या न च कांस्यादौ भोजनादिकम् प्रति अस्पृश्यस्पर्शस्य प्रतिबन्धकत्वकल्पनादेवोपपत्तौ तदनङ्गीकार इति वाच्यम्। प्रवृत्ते च असंस्पृश्यस्पर्शस्यासंस्पृश्यसंयोगरूपतया सति तन्नाशे प्रतिबन्धकाभावसद्भावात् कांस्यादौ अन्तरा भस्मादिसंयोजनं भोजनाद्यर्हतापत्तेरिति पुनः प्रत्यवतिष्ठते।



ननु भस्मादिनेति। प्रथमेनादिपदेनाम्लादेः द्वितीयेन च तामादेः परिग्रहः। कृतध्वंसविशेषणेनैव कांस्यादेः शुद्धत्वोपपत्तौ अतिरिक्तशक्त्यङ्गीकारोऽनुचित इति समाधत्ते भस्मादिसंयोगेति। यत्र कांस्यादौ भस्मादिसंयोगध्वंसानन्तरं पुनरस्पृश्यस्पर्शः तत्रापि भस्मादिसंयोगध्वंसस्य सत्त्वाच्छुद्धतापत्तिरतः सहितान्तं ध्वंसविशेषणम्। साहित्यं चात्र सम्बन्धविशेषनियन्त्रितं सामानाधिकरण्यम् अस्पृश्यवस्तूनामनुगमकरूपस्य दुर्वचनतया सामान्यधर्मावच्छिन्नाभावनिवेशासम्भवात् यत्किञ्चिदस्पृश्यस्पर्शाभावस्य च तत्र सत्त्वात्तदापत्तिस्तदवस्थैव इत्यतो यावदिति। तथा च तत्र यावतां तत्तदस्पृश्यस्पर्शाभावानां निरवच्छिन्नविशेषणतासम्बन्धेन असत्त्वात् नोक्तदोष इति भावः। यत्र च भस्मादिसंयोगास्पृश्यवस्तुसंस्पर्शौ युगपदेवोत्पन्नौ विनष्टौ च तत्र च तत्तदस्पृश्यस्पर्शाभावकूटसामानाधिकरण्यविशिष्टभस्मादिसंयोगध्वंसमादाय शुद्धतापत्तिरतो भस्मादिसंयोगकालावच्छेदेन तत्र विद्यमानार्थैककालीनान्तं अभावविशेषणम्। तथा च तत्र भस्मादिसंयोगक्षणावच्छेदेन यावत्तत्तदभावानामसत्त्वान्न दोष इति भावः।

स्वत्वमपि न पदार्थान्तरम्। यथेष्टविनियोगयोग्यत्वस्य स्वरूपत्वात्। तदवच्छेदकञ्च प्रतिग्रहादिलब्धत्वमेवेति।

चैत्रस्य इदं धनमित्यादौ यत् स्वत्वं प्रतीयते, तत् पदार्थान्तरमिति मतं निरस्यति स्वत्वमपीति। अपिनानुक्तसमुच्चायकेन प्रतियोगित्वपरिग्रहः। ननु तर्हि स्वत्वं किं स्वरूपमत आह यथेष्टेति तदवच्छेदकं चेति। तादृशयोग्यत्वप्रयोजकमित्यर्थः। प्रतियोगित्वं प्रतियोगिस्वरूपं प्रतियोगितावच्छेदकरूपं वेत्यादिकं बहुतरमूहनीयम्।

( इति पदार्थान्तर्भावग्रन्थः )

अथ विधिर्निरूप्यते प्रयत्नजनकचिकीर्षाजनकज्ञानविषयो विधिः। तत्प्रतिपादको लिङादिर्वा। कृत्यसाध्ये प्रवृत्त्यदर्शनात्, कृतिसाध्ये प्रवृत्तिदर्शनात् कृतिसाध्यज्ञानं प्रवर्त्तकम्। न च विषभक्षणादौ प्रवृत्तिप्रसङ्गः, इष्टसाधनतालिङ्गककृतिसाध्यताज्ञानस्य काम्यस्थले, विहितकालजीवित्वनिमित्तज्ञानजन्यस्य नित्यनैमित्तिकस्थले प्रवर्त्तकत्वात्। न चाननुगमः। स्वविशेषणवत्ताप्रतिसन्धानजन्यत्वस्यानुगतत्वात् इति गुरवः। तन्न। लाघवेन कृतिसाध्येष्टसाधनताज्ञानस्यैव चिकीर्षाद्वारा प्रयत्नजनकत्वात्। न च नित्ये इष्टसाधनत्वाभावात् अप्रवृत्तिप्रसङ्गः। तत्रापि प्रत्यवायपरिहारस्य पापक्षयस्य च फलत्व कल्पनात्। तस्मात् कृतिसाध्येष्टसाधनत्वमेव लिङाद्यर्थः।

सर्वेषां पदार्थानामुक्तपदार्थेषु यथायथमन्तर्भावं निरूप्य मूलन्यूनतां परिहर्त्तुं विधिं निरूपयिष्यमाणः शिष्यावधानाय तन्निरूपणं प्रतिजानीते अथेति। स्वपरमतसाधारणं विधित्वं तावन्निर्वक्ति प्रयत्नेति। प्रयत्नजनिका या चिकीर्षा तज्जनकं यज्ज्ञानं तद्विषय इत्यर्थः। गुरुमते कृतिसाध्यताज्ञानस्य, स्वमते च कृतिसाध्यत्वविशिष्टेष्टसाधनताज्ञानस्य चिकीर्षाद्वारा प्रयत्नजनकत्वात्। तन्मते च कृतिसाध्यत्वे स्वमते च कृतिसाध्यत्वविशिष्टेष्टसाधनत्वे लक्षणसङ्गतिः। अभिधायकस्य विधिमताभिप्रायेणाह तत्प्रतीति। तादृशज्ञानविषयकार्यत्वादिप्रतिपादकलिङादिरित्यर्थः। लिङादीत्यादिना लोट्तव्यादिसंग्रहः। वाकारोऽनास्थायाम्। गुरुमतमाशङ्कते कृत्यसाध्य इति। कृत्यसाध्यत्वेनावगत इत्यर्थः। प्रवर्त्तकमिति।

चिकीर्षाद्वारा प्रवृत्तिजनकमित्यर्थः। न च कृत्यसाध्यत्वज्ञानाभाव एव प्रवर्त्तकोऽस्त्विति शङ्क्यम्। कृत्यसाध्यत्वज्ञानाभावत्वेन तत्त्वे गौरवात्, कृतिसाध्यत्वाभावकृतिसाध्यभेदतत्तद्व्याप्यादिदर्शनानां प्रवृत्तौ प्रतिबन्धकत्वकल्पनेन महागौरवाच्चेति दिक्।

ननु विषभक्षणादौ प्रवृत्त्यापत्तिः कृतिसाध्यताज्ञानस्य तत्रापि सत्त्वादित्याशङ्कां निराचष्टे न चेत्यादिना। इष्टसाधनतालिङ्गकेति। 'अयं मत्कृतिसाध्यः मत्कृतिं विना अनुपपद्यमानत्वे सति इष्टसाधनत्वात्' इत्यनुमानिकेत्यर्थः। काम्यस्थल इति। प्रवर्त्तकत्वादित्यनेनान्वयः। ज्योतिष्टोमयागादौ इत्यर्थः। विहितकालेत्यादि। विहितकालशुचिजीवित्वज्ञानाधीनस्य कृतिसाध्यताज्ञानस्य नित्ये सन्ध्यावन्दनादौ, आशौचादिरूपनिमित्तज्ञानाधीनस्य तस्य नैमित्तिके स्नानादौ, प्रवर्त्तकत्वादित्यर्थः। "अहमेतत्कालिककृतिसाध्यसन्ध्यावन्दनकः एतत्कालिकशुचिजीवित्वात् इत्येवं रीत्या कृतिसाध्यत्वज्ञानस्य विहितकालशुचिजीवित्वादिज्ञानजन्यत्वमवसेयम्। अननुगम इति। प्रवृत्तिसामान्यप्रयोजकस्यैकस्याभावात् इति भावः। स्वविशेषणवतेत्यादि। स्वं प्रवर्त्तमानः पुरुषः, तस्य विशेषणम् तन्निष्ठो धर्मः कामनादिः, तद्वत्तायाः स्वविषयसाधनत्वादिरूपस्य तत्सम्बन्धस्य प्रतिसन्धानं ज्ञानं तज्जन्यत्वस्येत्यर्थः। लाघवेनेति। कारणतावच्छेदकलाघवेन इत्यर्थः। तन्मते कारणतावच्छेदकस्य जन्यत्वादिघटितत्वात् गौरवमिति भावः। कृतिसाध्येष्टसाधनतेति। अत्र बलवदनिष्टाननुबन्धित्वमप्यन्तर्भावनीयम्। तेन कृतिसाध्यत्वेन तृप्तिरूपेष्टसाधनत्वेन चावगते विषसम्पृक्तभोजनादौ न प्रवृत्त्यापत्तिः। विशिष्टज्ञानत्वावच्छिन्नस्य कारणत्वकथनन्तु प्राचां मतेन। नव्यमते कृतिसाध्यत्वादिज्ञानानां पृथगेव दण्डचक्रादिन्यायेन कारणत्वात्। प्रयत्नेति। प्रवृत्तीत्यर्थः। प्रत्यवायेति। प्रत्यवायस्य परिहारः प्रागभावः तस्य च दुःखजनकाभावतया तन्नाशस्येष्टत्वेन फलत्वमिति भावः।

न च कथं तत्प्रागभावस्य फलत्वं तस्याजन्यत्वादिति वाच्यम्। यत्सत्त्वे यत्सत्त्वमिति व्यवहारलभ्यस्य स्वरूपसम्बन्धरूपस्य सन्ध्यावन्दनप्रयोज्यत्वस्य तत्र सत्त्वेन फलत्वाक्षतेरित्यवधेयम्।

ननु 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यत्र लिङा स्वर्गसाधनकार्य्यं प्रतीयते यागस्याशुतरविनाशिनः कालान्तरभा-

विस्वर्गसाधनत्वायोगात् तद्योग्यं स्थायिकार्य्यमपूर्वमेव लिङा-र्थ्यः। कार्य्यं कृतिसाध्यम्। कृतेः सविषयत्वाद्विषयाकाङ्क्षायां यागो विषयत्वेनान्वेति, 'कस्य कार्य्यम्' इति नियोज्याकाङ्क्षायां स्वर्गकामपदं नियोज्यपरतयान्वेति। कार्य्यबोद्धा नियोज्यः। तेन 'ज्योतिष्टोमनामकयागविषयं स्वर्गकामस्य कार्य्यम्' इति वाक्यार्थः सम्पद्यते। वैदिकलिङ्त्वात्। 'यावज्जीवमग्निहोत्रं जुहुयात्' इति नित्यवाक्येऽप्यपूर्वमेव वाच्यं कल्प्यते। आरोग्य-कामो भेषजपानं कुर्यात्, इत्यादि लौकिकलिङः क्रियाकार्य्ये लक्षणा इति चेत्।

ननु लिङादेः कार्य्ये एव शक्तिरिति गुरुमतमाशङ्कते नन्विति। इच्छाविशेषरू-पस्य यागस्याशुतरविनाशिनः स्वर्गसाधनत्वेन भानं न सम्भवति अयोग्यत्वादित्यपू-र्वरूप एव कार्य्ये शक्तिरङ्गीकार्य्येत्याह यागस्येति। आशुतरविनाशिनः तृतीयक्षण-वृत्तिध्वंसप्रतियोगिनः। स्थायि फलपर्य्यन्तस्थायि। अन्वयप्रकारं दर्शयति कार्य्यं कृतिसाध्यमिति। यागे कृतिसाध्यत्वं साक्षात्, अपूर्वे तु यागद्वारा इति बोद्धव्यम्। कार्य्यबोद्धेति इदं मत्कृतिसाध्यमिति ज्ञानवानित्यर्थः। विध्यर्थमुख्यविशेष्यकं शाब्दबोधं दर्शयति तेनेति। स्वर्गकामस्य लिङर्थे कार्य्ये, तदेकदेशे च यागस्या-न्वयेन इत्यर्थः। न्यायमते तु तत्र "कृतिसाध्यबलवदनिष्टाजनकेष्टसाधनयागानुकू-लकृतिमान् स्वर्गकामः" इति वाक्यार्थबोधः।

ननु अपूर्वस्य पूर्वमनुपस्थितत्वात् कथं तत्र शक्तिग्रह इति चेत्। अत्र प्रवद-न्त्यभिज्ञाः। तन्मते तद्धर्मावच्छिन्नविषयकशाब्दबोधं प्रति तद्धर्मावच्छिन्नविषयक-शक्तिग्रहस्य तादृशोपस्थितेश्च हेतुता, न तु समानविषयकत्वेन हेतुहेतुमद्भावः। एवञ्च कार्य्यत्वावच्छिन्ने यत्र कुत्रचित् शक्तिग्रहः। योग्यताबलाच्चापूर्वरूपकार्य्यस्य शाब्द-बोधे भानं न हि यागविषयकमन्यत्कार्य्यं सम्भवतीति।

ननु नित्ये फलाभावात् कथं तत्रापूर्वबोधकतेत्यत आह यावज्जीवमिति। अपूर्वमेवेति। कार्य्यत्वेनेत्यादि। यद्वा पूर्वमित्यर्थः। लौकिकस्थलेऽपूर्वभानास-म्भवादाह आरोग्येति। क्रियाकार्य्ये इति। धात्वर्थनिष्ठकार्य्यत्व इत्यर्थः।

न यागस्याप्ययोग्यतानिश्चयाभावेन साधनतया प्रतीत्य-नन्तरं निर्वाहार्थम् अवान्तरव्यापारतयाऽपूर्वकल्पनात्। कीर्त्त-

नादिना नाशश्रुतेर्न यागध्वंसो व्यापारः। लोकव्युत्पत्तिबलात् क्रियायामेव कृतिसाध्येष्टसाधनत्वं लिङा बोध्यत इति लिङ्त्वेन विध्यर्थकत्वम्, आख्यातत्वेन यत्नार्थकत्वम्। पचति पाकं करोतीति विवरणदर्शनात्, किं करोतीति प्रश्ने पचतीत्युत्तरात् चाख्यातस्य प्रयत्नार्थकत्वनिश्चयात्।

लौकिकालौकिकसाधारण्येन कार्य्यत्वादावेव लिङादेः शक्तिरङ्गीकार्य्या इत्याशयेन समाधत्ते यागस्येति। अयोग्यत्वात् यागस्य स्वर्गसाधनत्वेन भानं न सम्भवतीत्युक्तदोषं निराचष्टे अयोग्येति। अयोग्यतासंशयसत्त्वेऽपि तस्याविघटकत्वात् शाब्दबोधो भवत्येवेति भावः। वाक्यादिष्टसाधनत्वे यागेऽवगते तस्याशुतरविनाशिनो व्यापारं विना फलजनकत्वासम्भवात् तन्निर्वाहाय अपूर्वं कल्प्यते इत्याह तन्निर्वाहार्थमिति।

ननु यागध्वंसस्यैव व्यापारत्वमस्तु किमपूर्वकल्पनेन इत्यत आह कीर्त्तनादिनेति। आदिना "कर्मनाशाजलस्पर्शात् करतोयाविलङ्घनात्। गण्डकीबाहुतरणात् धर्मः क्षरति कीर्त्तनात्" इत्यनोक्तकर्मनाशाजलस्पर्शादिपरिग्रहः। ध्वंसस्य व्यापारत्वे स्वर्गधारापत्तिरित्यपि दूषणं विभावनीयम्। लोकव्युत्पत्तीति। लोकव्यवहार इत्यर्थः। स च यो यत्र प्रवर्त्तते स कृतिसाध्यत्वेनेष्टसाधनत्वेन च तज्जानातीत्येवं रूपः। केचित्तु यदिच्छया यत्र प्रवृत्तिः तत्तत्साधनमिति लोकव्यवहार इत्याहुः। नव्याः पुनः लोके पचेतेत्यादिलिङादिसमभिव्याहारस्थले क्रियायामेव कृतिसाध्यत्वविशिष्टेष्टसाधनत्वबोध इति नियमबलादित्यर्थः। सर्वत्रेति शेष इति व्याचख्युः। आख्यातत्वेनेति। तच्च सङ्केतसम्बन्धेनाख्यातपदवत्त्वं तिबादिकमेव शक्यतावच्छेदकमिति तु नव्याः। यत्नार्थकत्वं कृतित्वावच्छिन्नवाचकत्वम्। किं करोतीति। कृतित्वावच्छिन्ने जिज्ञासितसम्बन्धकं हि तत्तत्प्रश्नवाक्यम्। उत्तरवाक्यस्य कृतित्वावच्छिन्ने पाकसम्बन्धे बोधकत्वे एव तन्निवर्त्तकत्वम् नान्यथेति भावः।

रथो गच्छतीत्यादौ अनुकूलव्यापारे लक्षणा। देवदत्तः पचति, देवदत्तेन पच्यते तण्डुलः, इत्यादौ कर्त्तृकर्मणोर्नाख्यातार्थत्वम्। किन्तु तद्गतैकत्वादीनामेव। तयोराक्षेपादेव लाभः।

ननु 'रथो गच्छति' इत्यादौ आख्यातस्य कृतिबोधकत्वासम्भवात् तदनुरोधेन व्यापार एव शक्तिर्वक्तव्येत्यत आह रथो गच्छतीत्यादाविति। व्यापारे अनुकूलोत्कीर्त्तनं तु तेन सम्बन्धेन व्यापारे गमनस्यान्वयलाभाय। नव्याः पुनः गच्छतीत्याख्यातस्य जानातीत्यादाविव आश्रयत्वे निरूढ़लक्षणा। न चाश्रयता सम्बन्धेनैव प्रथमान्तार्थे गमनादेरन्वयेन निर्वाहे आश्रयत्वे निरूढ़लक्षणाकल्पनं निरर्थकमिति वाच्यम्। नामार्थयोरिव धात्वर्थनामार्थयोरभेदातिरिक्तसम्बन्धेन अन्वयस्याव्युत्पन्नत्वात् तत्र तथा अन्वयसम्भवात्। स्तोकं पचतीत्यादौ स्तोकादेर्धात्वर्थे पाकेऽन्वयादभेदातिरिक्तेति ध्येयम्। वैयाकरणमतं निराचष्टे देवदत्त इति। नाख्यातार्थत्वमिति। आख्यातस्य कर्त्रादौ शक्तिस्वीकारेऽनन्तकृत्यादेः शक्यतावच्छेदकत्वमङ्गीकर्त्तव्यम्। कृत्यादौ शक्तिस्वीकारे तु कृतित्वादिजातेः शक्यतावच्छेदकत्वात् लाघवमिति भावः तद्गतैकत्वादीनामेवेति। आख्यातार्थत्वमिति पूर्वेणान्वयः। आदिना कृत्यादिपरिग्रहः।

ननु तर्हि कर्त्तृकर्मणोः कथं लाभ इत्यत आह तयोरिति। आक्षपादेवेति। परमतेन। स्वमते तु प्रथमान्तपदेनैव तल्लाभात्। "देवदत्तः तण्डुलं पचति" इत्यत्र "तण्डुलकर्मकपाकानुकूलकृतिमान् देवदत्त" इत्यन्वयबोधः। "देवदत्तेन पच्यते तण्डुलः" इत्यत्र तु देवदत्तसमवेतकृतिजन्यपाककर्मीभूतस्तण्डुलः इति शाब्दबोधः। न च "देवदत्तः पचति" इत्यत्र तृतीया, "तण्डुलः पच्यते" इत्यत्र च द्वितीया स्यात् तत्र कर्त्तृकर्मणोराख्यातेनाभिधानादिति वाच्यम्। अनभिहिते कर्त्तृत्वे तृतीयायाः, तादृशे च कर्मत्वे द्वितीयायाः विधानेन अदोषादिति ध्येयम्।

**प्रजयतीत्यादौ धातोरेव प्रकर्षे शक्तिः। उपसर्गाणां द्योतकत्वमेव न तु तत्र शक्तिरस्ति।**

उपसर्गाणां वाचकत्वमतं निरस्यति प्रजयतीत्यादाविति। ननु धातुनैव प्रकर्षादेर्वैयर्थ्यमत आह उपसर्गाणामिति। द्योतकत्वं तात्पर्यग्राहकत्वम्। एतेन "इतरनिपातानावाचकत्वम्" इति सूचितम्।

यथाहि एवकारस्यायोगव्यवच्छेदोऽर्थः 'शङ्खः पाण्डुर एव' इत्यादौ अन्ययोगव्यवच्छेदश्च 'पार्थ एव धनुर्द्धरः' इत्यादौ इत्यादिकं बहुतरमूहनीयम्।

**पदार्थज्ञानस्य परमप्रयोजनं मोक्षः तथा हि 'आत्मा वारे**

द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य’ इति श्रुत्या श्रवणादीनां तत्त्वसाक्षात्कारे हेतुत्वबोधनात्। श्रुत्या देहादिविलक्षणात्मज्ञाने सत्यप्यसम्भावनानिवृत्तेः युक्त्यनुसन्धानरूपमननसाध्यत्वात्। मननोपयोगिपदार्थनिरूपणद्वारा शास्त्रस्यापि मोक्षोपयोगित्वम्। तदनन्तरं श्रुत्योपदिष्टयोगविधिना निदिध्यासने कृते तदनन्तरं देहादिविलक्षणात्मसाक्षात्कारे सति देहादौ अहममिमानरूपमिथ्याज्ञाननाशे सति दोषाभावात्। प्रवृत्त्यभावे धर्माधर्म्मयोरभावात्। जन्माभावे पूर्वधर्माधर्म्मयोरनुभवेन नाशे चरमदुःखध्वंसरूपो मोक्षो जायते। ज्ञानमेव मोक्षसाधनम्। मिथ्याज्ञाननिवृत्तेः ज्ञानमात्रसाध्यत्वात्। ‘तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय’ इति साधनान्तरनिषेधात् च।

प्रेक्षावत्प्रवृत्तये सकलकामनाविषयमुक्तिप्रयोजनकतां दर्शयति पदार्थज्ञानस्येति। पदार्थतत्त्वज्ञानस्येत्यर्थः। अन्येषामवान्तरप्रयोजनानामपि सद्भावादाह परमेति। श्रुतेरयमर्थः ‘अरे मुमुक्षुणात्मा द्रष्टव्यः’। मुमुक्षोः आत्मदर्शनम् इष्टसाधनम् इति यावत्। आत्मदर्शनोपायं दर्शयति श्रोतव्य इत्यादि तेनार्थक्रमेण शब्दक्रमस्त्यक्तो भवति ‘अग्निहोत्रं जुहोति’ ‘यवागूं पचति इत्यादिवत्। असम्भावनानिवृत्तेरिति। अप्रामाण्यज्ञाननिवृत्तेरित्यर्थः। युक्त्यनुसन्धानेति। अयं भावः युक्तिभिरनुचिन्तनं मननम्। तत् च आत्मन इतरभिन्नत्वेन अनुमानम्। तत् च भेदप्रतियोगीतरज्ञानसाध्यम्। तदर्थं सकलपदार्थनिरूपणमिति मोक्षोपयोगित्वं विशदयति तदनन्तरमिति। मननानन्तरमित्यर्थः। श्रुतस्यार्थस्य नैरन्तर्य्येण अनुसन्धानरूपनिदिध्यासनस्य उपायमाह योगविधिनेति। इन्द्रियाणि विषयेभ्यः प्रत्याहृत्य इन्द्रियेभ्यः मनः प्रत्याहृत्य साक्षात्कर्त्तव्ये वस्तुनि मनःप्रणिधानं योगः। तदनन्तरं निदिध्यासनानन्तरम्। मिथ्याज्ञाननाशे वासनासहितमिथ्याज्ञाननाशे। दोषः रागादिः। एवकारेण कर्म्मव्यवच्छेदः। मिथ्याज्ञानेति। शुक्त्यादौ रजतभ्रमो विशेषदर्शनेनैव यथा निवर्त्तते तथा प्रकृतेऽपीति भावः।



ननु ‘तत्प्राप्तिहेतुविज्ञानं कर्म्म चोक्तं महामुने’ इति

र्णोऽपि मोक्षसाधनत्वश्रवणात् ज्ञानकर्मणोः समुच्चय इति
। न। 'नित्यनैमित्तिकैरेव कुर्वाणो दुरितक्षयम्। ज्ञानं च
मलीकुर्वन् अभ्यासेन च पाचयेत्। अभ्यासात्त्पक्वविज्ञानं
वल्यं लभते नरः', इत्यादिना कर्मणो ज्ञानसाधनत्वप्रतिपादनात्
नद्वारैव कर्ममोक्षसाधनम्, न साक्षात्। तस्मात् पदार्थ-
नस्य मोक्षः परमप्रयोजनम् इत्येव रमणीयम् इति।

कैवल्यं लभते नरः इत्यादिना 'क्षीयन्ते च अस्य कर्माणि तस्मिन् दृष्टे परावरे'
ादि श्रुतेः 'ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा' इत्यादिस्मृते[illegible]
नद्वारैवेति। अत्रायं क्रमः निष्कामतया भगवत्प्रीत्यर्थं कृतैः कर्मभि[illegible]
रूपात्मशुद्धिर्भवति। ततो विषयेषु वैराग्यम्। ततः श्रवणादौ प्रवृत्तिः।
ः श्रवणादिक्रमेण तत्त्वज्ञानोत्पत्तौ पूर्वोक्तमिथ्याज्ञाननाशादिक्रमेण मोक्ष-
प्तिः। अधिकमस्मदीयाभिनवचिन्तामणिव्याख्यायामनुसन्धेयम् तर्ककर्कश-
चारचातुरीधुरीणैरिति।

**कणादन्यायमतयोर्बालव्युत्पत्तिसिद्धये।**
**अन्नंभट्टेन विदुषा रचितस्तर्कसंग्रहः ॥१॥**

इति तर्कसंग्रहः समाप्तः।

इति श्रीमदन्नंभट्टोपाध्यायविरचिता तर्कदीपिका समाप्ता।

कौण्डिन्यगोत्रसम्भूतो नीलकण्ठाख्यपण्डितः।
कृतिमार्पिपदे तस्मै चन्द्रचूडाय मङ्गलम्।

सम्पूर्णोऽयं ग्रन्थः।

इति श्रीमत्पार्वतीश्रयपयःपारावारराकाचन्द्रायमानपदवाक्यप्रमाणपारावारीण-
श्रीरामभट्टतनूजश्रीनीलकण्ठभट्टविदुषा विरचितः तर्कसंग्रहदीपिका-
प्रकाशः समाप्तः ॥ १ ॥

---




पण्डितकुलपतिः श्रीजीवानन्दविद्यासागर बि, ए।

PANDIT JIVANANDA VIDYASAGARA B. A.

SUPERINTENDENT FREE SANSKRIT COLLEGE CALCUTTA.